'अहम्' इति ज्ञानोपपत्तिः। 'आत्मानमात्मना जानामि' इत्याद्युपपत्तिश्च। 'अहम् इति जानामि' इत्याद्युपपत्तिश्च। बिम्बप्रतिबिम्बयोर्वास्तवभेदाभावात्स्वाति-

(कुञ्चिकाटीका)

भवतीत्यर्थः। वृत्तिविषयस्य पुरुषस्यापि घटादिवद् दृश्यत्वादिति भावः। *ज्ञानोपपत्तिः*। आत्मनो विज्ञानविषयत्वोपपत्तिः। आत्मानं जानातीत्यादौ (१)एकस्यैव कर्तृत्वकर्मत्वोपपत्तिरित्यर्थः।

ननु आत्मनो ज्ञानकर्मत्वस्वीकारे (२)अनात्मवत् स्वयंप्रकशत्वानुपपत्तिः, 'न जानामि' इत्यनुरोधेनाज्ञातत्वस्वीकारे च स्वयञ्ज्योतिष्ट्वक्षतिरिति चेत् सत्यम्। "अन्यदेव तद्विदितादथोऽविदितादधि" इति श्रुत्या तस्य ज्ञाताज्ञातविलक्षणत्वात्। 'आत्मानमहं जानामि' इत्यनुभवस्य का गतिरिति चेद्। शुद्धस्यैवाऽऽत्मनः स्वप्रकाशत्वात्। यद्यपि ज्ञानेच्छादीनां सविषयकत्वं स्वभावः, तथापि सविषयत्वं विषयसम्बन्धः, सच न तात्त्विकः, किन्तु आध्यासिकः। उपाधिविशिष्टस्य तु ज्ञानकर्मत्वेऽप्यविरोधः। तदाह *आत्मानमित्यादि*। (३)अन्तःकरणविशिष्टं चैतन्यं जीवः, तदुपहितः साक्षी। तत्रेन्द्रियाणां तज्जन्यज्ञानानां चानुसन्धाता यद्यपि प्रमातैव, तथापि प्रमातुरप्यनुसन्धानार्थं साक्ष्यभ्युपगमः। साक्षी तु ब्रह्माभिन्नः स्वप्रकाशतया निरपेक्ष एव स्वपरविषयाननुसन्धत्त इति वृत्तिरूपं ज्ञानं तद्गतप्रामाण्यं च विषयः।(३)

ननु पुरुषस्यापि ज्ञानविषयत्वे स्वप्रकाशत्वभङ्ग इत्यत आह *बिम्बप्रतिबिम्बयोरिति*। स्वेनैव प्रकाशोऽस्य स्वप्रकाशः। अयं भावः—घटादीनां प्रकाशको दीपो यथा स्वप्रकाशे दीपान्तरं नापेक्षते, एवमर्थप्रकाशकं ज्ञानमपि स्वप्रकाशे ज्ञानान्तरं नापेक्षते। ज-

(कलाटीका)

तदेतद्ध्वनयन्स्वप्रकाशत्वमात्मन आह *आत्मानमिति*। ज्ञानस्यापि स्वप्रकाशत्वायाह *अहमितीति*। ननु बिम्बप्रतिबिम्बयोर्भेदस्य कल्पनात्कथं स्वप्रकाशत्वमात्मनोऽत आह *बिम्बेति*। कल्पितभेदस्य तद्बाधकत्वादाह *वास्तवेति*।

---

(१) 'जानातीत्यादौतु एकस्यैव' इति ग पु० पाठः।

(२) 'ननु आत्मा स्वयंप्रकाशः सैन्धवघनवत्, विज्ञानघनत्वात् स्वयंज्योतिःस्वरूप०। तथाच कदाचिदिदं जानामीत्यनुभव०। कदाचिच्च न जानामीत्यनुभव० कथम्?। ज्ञानकर्मत्वस्वीकारे हि' इति ग० पु० पाठः। (३) अन्तःकरणेत्यादिर्विषय इत्यन्त पाठोऽत्र गपुस्तके नास्ति।

रिक्ताप्रकाश्यत्वरूपं स्वप्रकाशत्वं पुरुषस्योपपन्नम् । एतत्सर्वं साक्षिभास्यमिति तन्निष्ठप्रकारत्वावच्छिन्नतद्विशेष्यताकत्वरूपं प्रामाण्यमपि ज्ञानस्य स्वतो ग्राह्यमे-

( कुञ्जिकाटीका )

डवैलक्षण्यं हि ज्ञानत्वमिति न प्रकाश्यत्वेऽपि घटादिवज्जडत्वप्रसङ्गः । अर्थप्रकाशनकाले च प्रकाशकस्याप्रकाशेऽर्थसंवेदनमेव न स्यात् । नहि अप्रकाशितो दीपो घटादिकं प्रकाशयतीति ।

(१)*साक्षिभास्यम्* । साक्षिवेद्यम् । *तन्निष्ठेति* । घटत्वनिष्ठप्रकारत्वावच्छिन्नघटत्ववद्विशेष्यकत्वमित्यर्थः । *स्वतो ग्राह्यमिति* । स्वतोग्राह्यत्वं च दोषविशेषाभावे सति यावत्स्वाश्रयग्राहकसा-

( कलाटीका )

अयं भावः—यथा सूर्यो बिम्बरूपेण प्रकाशकः प्रतिबिम्बरूपेण च प्रकाश्यः, एवं पुरुषः (२)स्वरूपेण ज्ञाता स्वसम्बद्धवृत्तिसम्बन्धेन च ज्ञेय इति प्रकारभेदान्न कर्तृकर्मविरोधः । आत्मनस्तद्रूपस्वप्रकाशत्वञ्चानन्याधीनप्रकाशफलोपधानकत्वम् । तदुक्तं योगभाष्यकृता 'पुरुष एव तु तं प्रत्ययं स्वात्मालम्बनं पश्यति, न तु पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते "विज्ञातारमरे केन विजानीयाद्" इति, 'केन प्रकाशान्तरेण विज्ञातारं लोको विजानीयादिति श्रुत्यर्थः' इति तद्व्याख्यातारः । अत एव चित्तस्यैवात्मत्वं वदतो बौद्धस्य मते "न तत्स्वाभासं दृश्यत्वाद्" इति सूत्रेण कर्तृकर्मविरोध उपन्यस्तो योगसूत्रकृता । तत्र स्वाभासत्वं स्वगोचरवृत्तिं विना स्वग्राह्यत्वम् । विपक्षे बाधकश्च तां विना साक्षात्स्वभास्यत्वे कर्तृकर्मविरोध इति तदर्थः। आत्मा तु दृश्यभिन्नः द्रष्टृत्वात् । दृश्यत्वं च फलव्याप्यत्वरूपं प्रकाश्यत्वम् । आत्मनो द्रष्टव्यत्वं च वृत्तिव्याप्यत्वमेव, न फलव्याप्यत्वरूपम् । स्वप्रकाशस्य प्रकाशापेक्षाविरहात् । स्वप्रकाशत्वं च फलीभूतचेतनाव्याप्यत्वे सति वृत्तिव्याप्यतयाऽपरोक्षव्यवहारयोग्यत्वं प्रागुक्तरूपमेव । नचैवं तव श्रुत्यादीनां प्रामाण्यं न स्यात्, प्रमाख्यफलाजनकत्वादिति वाच्यम् । पुरुषनिष्ठाविद्यानिवृत्तेरेव तत्फलत्वात् प्रमाख्यफलाभावेऽप्यक्षतेरिति ।

ज्ञानस्य स्वप्रकाशत्वमुपपादयति *एतदिति* । घटादिकं पुरुषा-

(१) पूर्वं (२) अनेनाङ्केनाङ्कितः पाठः सर्वोऽप्ययमास्ति ग० पु० ।

(२) 'एव आत्मा स्वस्वरूपेण' इति ख० पु० पाठः ।

च । औत्तरकालिकबाधे तु तदंशे भ्रमत्वकल्पनम् । यथा च प्रदीपो रूपादिकं प्रकाशयन्नात्मानमपि प्रकाशयति, एवं ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति । एवं शब्दोऽपि । ज्ञानशब्दप्रदीपानां त्रयाणामपि स्वप्रकाशत्वात् ।

अत एव ज्ञाने सति 'जानामि न वा' इति संशय-

---

( कुञ्चिकाटीका )

मग्रीग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानं, तद्ग्राहकं साक्षिज्ञानं, तेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यत इत्यर्थः । इच्छाप्रामाण्यस्य स्वतोग्राह्यत्वाभावादुक्तम् *ज्ञानस्येति* । ननु प्रामाण्यस्य स्वतो ग्राह्यत्वेऽनभ्यासदशोत्पन्नज्ञाने ऽप्रामाण्यसंशयानापत्तिरिति चेद् । सत्यम् । तत्र संशयजनकदोषेण प्रामाण्यस्याग्रहात् । अत एव दोषविशेषाभावे सतीत्युक्तम् । अत एवाह *औत्तरकालिकेति* । 'इद ज्ञानमप्रमा' इति बाधानिश्चये तु पूर्वज्ञानस्य भ्रमत्वं कल्प्यत इत्यर्थः । *आत्मानमपीति* । एवं च 'घटमहं जानामि' इत्यत्र घटो ज्ञानमात्मा चेति त्रयं ज्ञानेन विषयीक्रियते । इदमेव त्रिपुटीप्रत्यक्षं प्राभाकराणाम् । तार्किकाणां तु 'घटविषयकज्ञानवानहम्' इत्यनुव्यवसायेन ज्ञानग्रहः । ननु ज्ञानोत्पादिका चक्षुःसंयोगादिरूपसामग्री कथं ज्ञाने ज्ञानविषयतां जनयेत् धर्मिण एवाभावादिति चेन्न । यथा कपालसंयोगो गुणविशिष्टं घटमुत्पादयति एवं प्रकाशत्वविशिष्टस्य ज्ञानस्योत्पत्तौ बाधकाभावात् । *एवं शब्दोऽपीति* । आत्मानमपि प्रकाशयतीति पूर्वेणान्वयः । अत्रैव हेतुमाह *प्रकाशत्वादिति* । त्रयाणामपि प्रकाशरूपत्वादित्यर्थः । ज्ञानस्य स्वप्रकाशत्वं चानुव्यवसायाविषयत्वात् ।

*अत एव* । स्वप्रकाशत्वादेव । *ज्ञानेसतीति* । 'अयं घट'

( कलाटीका )

दिकं चेत्यर्थः । तत्त्वादेव तस्यापि ग्रह इति भावः । एवेन मतान्तरव्यवच्छेदः । इदमप्यबाधितस्थले इत्याह *औत्तरेति* । ननु ज्ञानस्य स्वप्रकाशत्वं विरुद्धमत आह *यथाचेति* । *ज्ञानमर्थमिति* । "तमेव भान्तमनुभाति सर्वम्" इति श्रुत्या तथाऽवगमात् ।

ज्ञानमात्माश्रयमिति मतेऽपि तत्स्वप्रकाशमेवेतिसूचयन्नाह—*अत एवेति* । तस्य तत्त्वादेवेत्यर्थः । निश्चयस्य, विपरीतज्ञानस्य च तथा

स्य, 'न जानामि' इति विपर्ययस्य चाननुभवः । अनुव्य-वसायस्य ज्ञानग्राहकत्वे त्वनवस्था । 'घटं जानामि' इ-तिवत् 'ज्ञानं जानामि' इत्यनुभवाभावाच्च । अभेदे ऽपि

( कुञ्चिकाटीका )

इत्येवं घटे प्रकाशिते तद्विषयज्ञानस्यापि प्रकाशात् ज्ञानविषयकः संश-यादिर्न भवतीत्यर्थः । 'घटविषयकज्ञानवानहम्' इत्यनुव्यवसायेन ज्ञानग्रह इति तार्किकमतं निराकरोति *अनुव्यवसायस्येति* । प्रथम-ज्ञानं द्वितीयज्ञानेन प्रकाश्यं तदपि ज्ञानान्तरेणेत्येवमनवस्थेत्यर्थः । अ-प्रकाशितस्यानुव्यवसायस्य प्रकाशकत्वासम्भवादिति भावः । *अ-नुभवाभावाच्चेति* । तथाच ज्ञानस्य न ज्ञानग्राह्यत्वम् ।

ननु यत्र विषयतया प्रत्यक्षं तत्पूर्वक्षणे विषयस्य सन्निकर्षस्य चापेक्षणीयत्वात्कथं स्वतो ग्राह्यत्वं इति चेन्न । ज्ञानेन्द्रियसन्निकर्षस्य ज्ञानप्रत्यक्षे हेतुत्वानभ्युपगमेन विषयतत्सन्निकर्षाघटितायाः एव सा-मग्र्या व्याप्तेरुपगमात् ।

ननु स्वस्यैव कर्तृत्वकर्मत्वे विषयविषयित्वे च कथम्, अत आह *अ-भेदेऽपीति* । यथा हि तार्किकमतेऽपि 'सर्वं प्रमेयम्' इति ज्ञाने स्वस्यैव

( कलाटीका )

सति प्रतिबन्धकत्वात् । अन्यथा तदभावात्तदापत्तिरिति भावः । परम-ते बाधकमाह *अन्विति* । किञ्च भवदुक्तानुव्यवसायो विषयग्राहक एव, न ज्ञानग्राहकः, अन्यायशस्तु नोपलभ्यत इति तस्य तद्ग्राहक-त्वमेव वस्तुतो ऽसिद्धमिति अभ्युपेत्यात्र तदुक्तमयुक्तमित्याह *घट-मिति* । *भावाच्चेति* । न तस्य तद्ग्राहकत्वमिति शेषः ।

ननु ज्ञानस्य स्वप्रकाशत्वे स्वस्य प्रकाश इत्यर्थकस्य स्वप्रकाशश-ब्दस्यानुपपत्तिः । क्रियाकर्मभावानुपपत्तेः । जन्या हि क्रिया जनकं च कर्म । नचैकस्यैवोभयरूपत्वं सम्भवति । बहुव्रीहौ तु कर्तृकर्मविरोधः । एवमभेदे विषयविषयिभावासम्भवः, सम्बन्धस्य सम्बन्धिस्वरूपभे-दनियतत्वेन विषयसम्बन्धित्वरूपं विषयित्वग्रहासम्भवात् । अत आह *अभेदेऽपीति* । आदिना स्वाभासमित्यादि ।'बाधकाभाव इति'इतिपाठः।

अयं भावः—तथा सति ईश्वरज्ञानस्य नित्यत्वमते तस्य कर्मज-न्यत्वाभावेन तत्कर्मणः कारकत्वानापत्त्या 'ईश्वरः सर्वं जानाति' इत्य-भावापत्तिः । निरुपाध्यात्मानं जानतोऽध्यात्मविद 'आत्मानं जाना-ति' इत्यभावापत्तिश्च । तस्मादर्थविशेषस्य कर्मकारकादिसंज्ञा वैया-

कर्मकर्तृभावस्य विषयविषयिभावस्य च 'स्वप्रकाश' इत्यादिव्यवहारानुरोधेन स्वीकारे बाधकाभावादित्यन्यत्र विस्तरः।

---

( कुञ्जिकाटीका )

विषयता, यथा वा द्रव्यादौ सद्व्यवहारः सत्ताप्रयुक्तः, सत्तायां तु स्वातिरिक्तसत्ताऽभावेऽपि सद्व्यवहारः, एवं स्वस्यैव, विषयविषयिभावो न विरुध्यते(१)। (२)एवं 'स्वात्मानं जानामि' इत्यादावेकस्यैव कर्तृकर्मभावश्च, तार्किकाणां स्वरूपसम्बन्धस्थल इव स्वस्यापि स्वसम्बन्धित्वसम्भवाच्चेति भावः।

( कलाटीका )

करणानाम्, तासां च यत्रापि सोऽर्थो नास्ति तत्रापि तदारोपेण स्वीकारात्तच्छास्त्रीयकार्यनिर्वाहेण तद्विरोधस्याप्यदोषत्वम्। एवं ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इत्यादौ सम्बन्धसम्बन्धस्य षष्ठ्या प्रतीयमानस्यानवस्थाभिया स्वाश्रयात्मकत्वाङ्गीकारावश्यकत्वेन यत् सम्बन्धज्ञानं तत् सम्बन्धस्वरूपात्सम्बन्धिनोर्भेद एव भवतीति नियमस्य त्यागात्सम्बन्धिभेदं विनापि विषयविषयिभावाङ्गीकारे बाधकाभावात्। किञ्च यथा तार्किकमतेऽन्येषु सत्तासम्बन्धात्सद्व्यवहारः, सत्ता तु स्वयमेव सद्व्यवहारभाक्, नैतावता आत्माश्रयः, तथा ज्ञानं क्रियाकर्मभावविषयविषयिभावयोरभावेऽपि स्वत एव सिद्धरूपत्वात्स्वप्रकाशत्वव्यवहारविषय इति।

(३)यद्यपि ब्रह्मणो विषयाभावान्नैवं स्वप्रकाशत्वं, तथापि ज्ञानस्याविषये ऽध्यात्मनि अविद्यादशायाम् जानामीत्यादिव्यवहारप्रवर्तनं स्वप्रकाशत्वम्। एवमन्यो ज्ञाता अन्यद् ज्ञेयमिति। अन्यत्र दृष्टमहमिति व्यवहारानुपपत्त्या सृज्यते तदुक्तं "अन्यथानुपपत्तिश्चेदस्ति प्रसाधिकापि न दृष्टिदृष्टवैमत्यं सैव सर्वबलाधिकेति" इति। तदाह *अन्यत्रेति*। गुरुमञ्जूषादावित्यर्थः। अत्र प्रसङ्गाद्वृत्तिविषये किञ्चिदुच्यते। ज्ञाने विषयस्य तत्वेन कारणतया पूर्वत्वेन पूर्वं प्राचीनैरर्थापरोक्षत्वलक्षणं कृत्वा ज्ञानापरोक्षत्वं लक्षणं कृतम्। अभिव्यक्तचैतन्याभिन्नत्वमर्थपारोक्ष्यमेतदपरोक्षत्ववदर्थव्यवहारानुकूलज्ञानत्वं ज्ञानापा-

---

( १ ) 'इतिभावः' इतिपाठः ग० पुस्तके। ( २ ) 'एवं–भावः' पाठोऽयं कुं० कपु० नास्ति।

( ३ ) 'यद्यपि' इत्यादिकलाग्रन्थोऽन्यत्र कुत्रापि कलापुस्तके नोपलभ्यते। खसंज्ञये पुस्तके एवोपलभ्यते।

( कलाटीका )

रोक्ष्यमिति । तत्राद्ये अभिव्यक्तत्वमात्रं चैतन्याभिन्नत्वमात्रत्वं अतिप्रसक्तमिति तथोक्तम् । तथाच चाक्षुषादिवृत्त्यभिव्यक्तं यच्चैतन्यं तदभावकत्वं लक्ष्यानुगतमनतिप्रसक्तं चेति नित्याभिव्यक्तसाक्षिचैतन्यमादायापि न दोष इति तद्भावः । तत्तावद्दूषयति परिमले 'अभिव्यक्तचैतन्याभिन्नत्वमर्थापारोक्ष्यम्' इति। मदीयक्रमानुरोधेनैतद्दूषणेनैव द्वितीयं सुतरां दुष्टमेवेति तावदित्यनेन सूचितम् । नन्वत्र किं स्वरूपसन्नभेदो विवक्षितः, उत स्फुरन् । आद्येऽपि तत्वेनैव विवक्षोत निरस्तभेदोपाधिकाभेदत्वेन । तत्र न तावदाद्य इत्याह 'स्वरूपभेदमात्रविवक्षायां चाक्षुषवृत्त्यभिव्यक्तपर्वतावच्छिन्नचैतन्येन व्यवहितवह्नेरपि परोक्ष्यत्वापत्तेः' इति । अत्र मात्रपदेनोभयव्यवच्छेदः।

अयं भावः। चैतन्ययोः स्वाभाविकाभेदे तद्वृत्त्यभिव्यक्तचैतन्ये साक्षादाध्यासिकवन्ह्यभेदोऽस्त्येव । किञ्च तदभिन्नाभिन्नस्य तदभिन्नत्वमितिन्यायेन मूलकारणोपादानककार्योपादानके श्रुतिसिद्धमूलकारणोपादानकत्वव्यवहारासिद्धेन सो ऽनाध्यासिकः, स विवक्षित इति तु न, सदसतोर्वास्तवाभेदायोगेनासम्भवापत्तेः । अभिव्यक्तपदस्य वृत्तिप्रयुक्ताभेदान्तराघटितान्यतरार्थत्वमपि न, शब्दमर्यादया तदलाभात् । प्रयुक्तत्वस्य साक्षात् परम्परासाधारण्ये न, तथापि चाक्षुषवृत्त्यभिव्यक्तधूम्रावच्छिन्नचैतन्यमादाय दोषस्य तदवस्थत्वाच्च, साक्षात्वस्यापि शब्दतोऽलाभाच्चेति नाद्यद्वितीय इत्याह 'निरस्तभेदोपाधिकाभेदविवक्षायां चरमसाक्षात्कारनिवर्त्याविद्यापोधेश्चरमसाक्षात्कारोत्पत्तिदशायां सत्वेन ब्रह्मणस्तदानीमपरोक्ष्याभावापत्तेः' इति।

अयं भावः । एवं विवक्षायां पूर्वदोषो न, तद्भेदस्य निरस्तभेदोपाधिकत्वाभावात् । तदाकारवृत्त्यभावेन तदावरकाज्ञानसत्वात् । प्रत्यक्षविषयघटादिस्थले तु तदा तदाकारवृत्तिसत्वेन तदावरकाज्ञाननिवृत्त्याभेदानुयोगिभेदकोपाधेरसत्वेन निरस्तभेदोपाधिकाभेदस्य सत्वमितिलक्षणसमन्वयः। ब्रह्मणि तु चरमसाक्षात्कारोत्पत्तिदशायां तदाकारवृत्त्या तदावरकाज्ञाननिवृत्तावपि अज्ञानान्तरमस्त्येव। श्रवणमननाभ्यां प्रपञ्चे वास्तवत्वबुद्ध्यपनयन व्यावहारिकत्वबुद्धिदृढीकरणम्, निदिध्यासनेन तु तामप्यपनीय प्रातिभासिकत्वस्वीकरणं, ततोऽसंदर्शनेन वृत्तिरूपसाक्षात्कारात्मकेन तत्वस्याप्यपनय इतिसिद्धान्तात् । अत एव सर्वोपाधिविहीनं हि स्वयंज्योतिरिति गीयते । नोपहितमपि । यदाह भगवान् भाष्यकारः । 'नापेये कान्तेन विषयः' इति । नचान्तःकरणवृत्तावपि अस्य सा-

( कलाटीका )

क्षात्कारे सर्वोपाधिविनिर्मोकः, तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्व-परविरोधिनो विद्यमानत्वात् । अन्तःकरणस्यैव जीवोपाधिरित्यर्थः। अन्यथा तु चैतन्यच्छायापत्तिं विनान्तःकरणवृत्तेः स्वयमचेतनायाः प्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगादिति मिश्रैरुक्तम्, 'न हि इयमुत्पन्ना सती पश्चादविद्या निवृत्ता येन नान्त्या स्यात् किन्त्वविद्याविरोधिभावतया तन्निवृत्त्यात्मैवोदीयते । अन्यच्च न खलु तद्ज्ञानं विना सवासना विविधदुःखहेतुरविद्योच्छिद्यते । नच तदुच्छेदमन्तरेण विगलितदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य' इति च । अत्र न हीत्यनेनाविद्याया अन्यत्वं निरस्तम् । अन्यच्च न खलु ज्ञानमित्यनेन प्रागुक्तार्थः स्पष्ट एवोक्तः । अत एव चाद्येन निरुपाधिब्रह्मसाक्षात्कारगोचरः कथमुपहितत्वेति तत्राह *नचेति* । 'निरुपाधिब्रह्मविषयं कुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदेति' । स्वस्याप्युपाधित्वाविशेषात् तत्तत्सत्तायां विनाशहेतुसान्निध्यात् विनश्यदवस्थत्वम् । एवं च नानुपहितविषयता नवोपाधेर्विनाशकान्तरापेक्षा इति भावः । ननु वृत्तिविशिष्टस्य शबलतया न साक्षात्कारे विषयता वृत्त्यवच्छिन्नात्मविषयत्वे च वृत्तेः स्वविषयत्वापातः, विशेषाग्रहणेन विशिष्टाग्रहणादुपलक्षितस्य तु न वृत्त्युपाधिकता इत्युच्यते । वृत्त्युपरागोऽत्र सत्तयोपयुज्यते न भोग्यतया, अतो वृत्तिसंसर्गे सति आत्मविषयो भवति, न तु स्वत इति न दोषः । ननु उपाधिसम्बन्धाद्विषयत्वविषयित्वे चोपाधिसम्बन्धो विषयित्वलक्षण इतीतरेतराश्रयत्वमत आह *अन्यथेति* । न साक्षात्कारस्य ब्रह्मविषयत्वप्रयुक्तं चैतन्यप्रतिबिम्बितत्वं किन्तु स्वतः घटादिवृत्तिष्वपि साम्यात् । चैतन्यब्रह्मेतिवृत्तेस्तत्सम्बन्धे इत्यर्थ इति कल्पतरुव्याख्यानम्, ननु निरुपाधि ब्रह्मेति । उपहितं वृत्तिविषये इति न युक्तम्, ब्रह्म शुद्धनिरुपाधिकमिति हि वृत्तिरूपसाक्षात्कारस्याकार इष्यते । नचोपाधौ विद्यमाने तदाकारः सम्भवतीति भावः । *निरुपाधिकब्रह्मविषयीति* । मिथ्याभूतेषूपाधिषु विद्यमानेष्वपि न वास्तवनिरुपाधिकत्वाकारसाक्षात्कारोदयो विरुध्यत इति भावः । *स्वस्वेतरोपेति* । अनेन चरमवृत्त्युदयकाले उपाध्यन्तराण्यपि सन्ति । टीकाया वृत्तेरेवोपाधित्ववर्णनं मनसो वृत्तिमात्रमस्तीत्यभ्युपेत्य वाद इति सूचितम् । उपाधिनिवृत्तावनुपहितस्य विषयत्वमिति । ननु वृत्त्युदये ह्युपाधेर्विनश्यदवस्थतामात्रं न तु विनश्योदय इत्याह—*ततःस्वेतीति* । दीक्षितैर्व्याख्यातम् । अभावः कल्पतरौ हेतुः ।

( कल्पटीका )

'तदात्मानं हि'इत्यादिप्रागुक्तवाचस्पत्ये तन्निवृत्त्यमेवेत्यस्य यथा यथोदयस्तथा तथा निवृत्तिरित्यर्थो नतूदयमात्रेण सर्वानवृत्तिरिति । एतदर्थमेवाविद्याविरोधिभावतयेति हेतूक्तिः । इष्टं चैतद्वृत्तिविम्बोदयतमोनिवृत्त्योः । आवरणभङ्गमात्रं चानेनोक्तमत एवान्यच्चेत्यादिना तदज्ञानस्योपाधिनिवर्तकत्वमुक्तम् । एवं च न विरोधः । अपिना इतर समुच्चयः । गन्धे शुद्धं विशुद्धं निरुपाधिकमिति रूपसाक्षात्कारात्मकात्मदर्शनं ब्रह्मावेशात्स्वरूपशून्यमिव करोति, भवति चेतितत्समाधिरिति "समाधिभावाच्च" इति सूत्रे मिश्रोक्ता स्वरूपमात्रमित्यर्थः । *मिथ्याभूतेषु* । मिथ्यात्वं प्राप्तेषु । ततः पूर्वं ग्रहात् तदा नाशकाभावादाह *विद्येति* । जगदुपादानत्वादि-तटस्थलक्षणे श्रवणमात्रेण मिथ्यात्वनिश्चये श्रवणमननपरिपाकेन सत्यज्ञानत्वादिज्ञेयत्वावच्छेदकलक्षणवच्छुद्धत्वादावपि मिथ्यात्वनिश्चयात् "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादैस्त्वमहंपदे सम्बोध्यत्वोच्चारयितृत्वाभ्यां बोधके 'कस्त्वं' 'कोहम्' इत्यादिजिज्ञासायां हि लोके 'अमुकोऽहमस्मि' इत्युत्तरदर्शनात्, एवमत्रापि कणादगौतमसाङ्ख्यादिशास्त्रपर्यालोचनयात्मनि बुद्धिपर्यन्तजडातिरेकग्रहे वृत्ते कर्मभिः शुद्धचित्तस्य संसारानिवृत्तेः सुखित्वाभिमानानिवृत्तेः 'कोहम्' इति प्रश्ने इदमुत्तरम्, तत आपाततोऽभेदान्वये जाते पुनर्विचारेण तस्मिन्नित्यनिर्दुःखत्वग्रहे स्वस्मिंश्च तद्वत्त्वग्रहेण बाधसन्देहे मननस्थानीयैतच्छास्त्रविचारसहितश्रुतिगणेन धर्ममात्रे मिथ्यात्वग्रहे धारणया च तद्वाक्यैर्निदिध्यासेनाऽखण्डार्थभानम् । धर्मेषु मिथ्यात्वग्रह एव च लक्षणेति व्यवह्रियते । श्रवणमननपरिपाकावेव ब्रह्मणि चित्तनिवेशरूपचित्तवेधात्मकत्वाद्धारणपदव्यवहार्यौ ततो ध्येयस्यालम्बनस्य ब्रह्मण एकरूपस्रोतःकरणात्मकं निदिध्यासनमिति सिद्धान्त इति भावः । इष्टं चैवं शुक्तिरजतादौ शुद्धं निरुपाधिकमित्यर्थतः सोपाधिकमशुद्धमित्यस्य भिन्नार्थत्वं सार्वजनीनमेव अन्यथा पर्यायतापत्तेः । एतदग्रे तरावादिः समुच्चय इत्यन्तः प्रागुक्तग्रन्थो द्रष्टव्यः *गन्धे उपाधीति* स्वस्वरूपावरके इत्यर्थः । वृत्तिदशायां तदुदयदशायां मात्रव्यवच्छेद्यमेवाह *नत्विति* । कल्पतरौ ततः तादृगुदयात् । *उपाधेः* । इतरोपाधेः । दोषान्तरमाह *वृत्त्यवच्छिन्नेति* । न दोषः । *नानुपहितसम्बन्धविषयता इति* । तस्याश्चेतनसम्बन्ध एव चैतन्यच्छायापत्तिः । उपाधिना सम्बन्धविशेष एव च प्रतिबिम्ब इति भावः । दोषद्वयोद्धारकतृतीयकक्षां दूषयति

( कलाटीका )

'सुखभेदाविवक्षायां साक्ष्यध्यासविषये दुःखशोकादौ तदानीं तद्रूपब्र-ह्माभेदास्फुरणादपरोक्षत्वाभावापत्तेः' इति । एतद्दोषोद्धाराय विशेषणदाने तु एतत्सञ्जालीयोक्तदोषाभावेऽप्यतिव्याप्तिस्तदवस्थैवेत्याह 'स्वव्यवहारानुकूलं यदभिव्यक्तचैतन्यं तदभेदविवक्षायामनुमेयवन्ह्यादिव्यवहारानुकूलेन जीवचैतन्येन प्रागुक्तरीत्यैवाभिन्नस्य वन्ह्यादेरापरोक्ष्यापातात्' इति ।

अयं भावः । अनुकूलप्रतिकूलशब्दयोर्हिताहितशक्त्योः साधारणकारणपरत्वम्, दृष्टश्च तत्र बहुशः प्रयोगः । किञ्च तयोः स्वाभाविकोभेदः । किञ्च जीवचैतन्यपदेन तस्यैव ग्रहणम्, अन्यथा जीवेनेत्येव वदेदिति, अत्रैव योजनाभेदेन एतद्दोषोद्धारेत्वाह 'स्वव्यवहारानुकूलो योऽभिव्यक्तचैतन्याभेदस्तद्वत्वविवक्षायां तत्तदाकारावृत्तिसमुल्लासमात्रादपि सम्भवति । व्यवहारे चैतन्याभेदस्यानपेक्षितत्वेनासम्भवापत्तेः' इति । अयं भावः । व्यवहारस्य साधारणपरत्वं सार्वजनीनम् । अत एव स्वप्रत्यक्ष इति नोक्तम् । किञ्च तस्य शब्दप्रयोगे रूढिः । तेन तद्ग्रहणे आत्माश्रयोपीति । विशेषणान्तरदाने योजनाभेदेनोक्तदोषवारणे तु आह 'स्वावरणनिवृत्त्यनुकूलचैतन्याभेदकत्वविवक्षायां आवरणनिवर्तकत्वग्रहणमपारोक्ष्यग्रहणाधीनमापरोक्ष्यग्रहणमावरणनिवर्तकत्वाधीनमित्यन्योन्याश्रयापत्तेरिति ।

अयं भावः । अयं ज्ञप्तावन्योन्याश्रयो नोत्पत्ताविति वृत्तेरेवावरणनिवर्तकत्वेऽपि अपरोक्षत्वग्रहणाधीनं तत्र तद्ग्रहणं तदभेदरूपे तत्र तद्ग्रहाधीनमितरद् ग्रहणमिति सः। किञ्च वृत्तेर्जडत्वेन स्वतोऽप्रकाशकत्वेन तत्सम्बन्धेन तद्रूपत्वं चेति तावत्पदसूचितमाह 'एवमुक्तरूपार्थपारोक्ष्यानिर्वचनायोगात्तदपेक्षमपरोक्षार्थव्यवहारानुकूलत्वं ज्ञानापारोक्ष्यम्' इति निर्वचनमप्युक्तमिति, अतः सिद्धान्तं तन्मतेनैव वैपरीत्येनाह 'तस्मात् स्वाविषयकज्ञानाजन्यज्ञानत्वं ज्ञानापारोक्ष्यमिति निर्वक्तव्यम् । तच्चक्षुषादिवृत्त्यभिव्यक्तचैतन्येषु नित्याभिव्यक्तसाक्षिचैतन्येषु चानुगतम्, अनुमितिशाब्दज्ञानादिभ्यश्च तत्तदविषयलिङ्गशब्दादिज्ञानजन्येभ्यो व्यावृत्तम् । नच विशिष्टज्ञानं विशेषणज्ञानजन्यमित्यभ्युपगमे दण्डकुण्डलोभयस्मृतिजन्यदण्डिप्रत्यक्षेऽव्याप्तिः, वस्तुगत्या यः स्वाविषयस्तद्विषयत्वं यस्य ज्ञानस्य जनकतायामवच्छेदकोटिप्रविष्टं तदजन्यत्वस्य विवक्षितत्वात् । उक्तस्मृतेर्दण्डिप्रत्यक्षे तदविषयकुण्डलाविषयत्वेनाजनकतया तत्रापि लक्षणसत्वात् । यदीश्वरमुपादानगोचरज्ञानतया

( कलाटीका )

"बहुस्यां प्रजायेयम्" इतिवत् इदं ज्ञानमस्य स्यादिति संकल्परूपतया कारणमिष्यते, तदा तज्जन्येषूक्तज्ञानेषु अव्याप्तिवारणाय सामानाधिकरणत्वं ज्ञाने विशेषणं देयम् । नच कोलाहले बुभुत्सितशब्दग्रहो बभुत्साजन्यस्तन्मूलबोधेच्छासाधनताज्ञानेनापि जन्य इति तत्राव्याप्तिः। बुभुत्सयान्यथासिद्धस्य तस्य शब्दग्रहकारणत्वाभावात् । बुभुत्सोत्तरशब्दान्तरग्रहप्रतिबन्धे सति क्लृप्तकारणादेव बुभुत्सितशब्दग्रह इति, तत्र बुभुत्सायाः कारणत्वाच्च । नच व्याप्तिज्ञानत्वावच्छिन्नं सर्वमनुमितिजनकं व्याप्तिज्ञानत्वादित्यनुमितावतिव्याप्तिः । तत्रानुमितेः सामान्यतः सर्वव्याप्तिविषयायाः स्वकारणज्ञानविषयत्वसत्त्वेऽपि स्वकारणव्याप्तिज्ञानवत् प्रकृतहेतुसाध्यविशेषोपरक्तया तद्विषयत्वाभावेन तस्याः स्वाविषयविषयकज्ञानजन्यत्वात् । नचैवमपि हेतुतावच्छेदकविशेषावच्छिन्नहेतुसाध्योपरक्तव्याप्तिज्ञानत्वावच्छिन्नसर्वपक्षीकरणे सत्युक्तानुमितावतिव्याप्तिः । सामान्यधर्ममात्रानवच्छिन्नतया यः स्वाविषयो न भवति तद्विषयत्वस्य विवक्षितत्वात् । तस्यामनुमितौ हेतुतावच्छेदकसाध्यतावच्छेदकयोः सामान्यधर्ममात्रानवच्छिन्नत्वेन विषयतया सामान्यधर्ममात्रानवच्छिन्नतया तदविषयत्वस्य सत्त्वात् । न च सामान्यधर्ममात्रेत्यत्र मात्रपदं व्यर्थमिति वाच्यम् । अनुमितिजनकतात्वरूपविशेषधर्मस्य भाने जनकतात्वरूपसामान्यधर्मस्यापि भानात् सामान्यरूपानवच्छिन्नतया स्वविषयस्याप्रसिद्धतया स्वपदेनोक्तानुमितेर्ग्रहीतुमशक्यत्वेनातिव्याप्तितादवस्थ्येन मात्रपदसार्थक्यात् । नचैवं विशेषरूपावच्छिन्नतया यः स्वविषयस्तदन्यविषयकज्ञानाजन्यज्ञानत्वमेवोच्यताम् । किं सामान्यधर्ममात्रानवच्छिन्नत्वघटितेनेति वाच्यम् । कारणीभूतज्ञाने विषयस्य सामान्यरूपमात्रावच्छिन्नस्य सामान्यरूपमात्रानवच्छिन्नात् स्वविषयाद् भेदद्योतनार्थं तद्घटितस्योक्तत्वात् । नच तथापि अनुमितिजनकत्वव्याप्यव्याप्तिज्ञानत्ववद्व्याप्तिज्ञानं चानुमितिजनकमित्याकारानुमितावतिव्याप्तिः । तत्र सामान्यधर्ममात्रानवच्छिन्नतया तद्विषयादनुमितिजनकत्वव्याप्यव्याप्तिज्ञानत्वाविशिष्टानुयोगिकानुमितिजकत्वव्याप्तिज्ञानत्वप्रतियोगिकस्य सम्बन्धस्योक्तानुमितिजनकत्वव्याप्यव्याप्तिज्ञानत्वप्रतियोगिकसम्बन्धस्योक्तानुमितिविषयस्य उक्तानुमितिजनकपरामर्शविषयत्वात् । न चानुपलब्धिप्रमाणजन्याभावज्ञानेऽतिव्याप्तिः, योग्यानुपलब्धेः प्रमाणत्वात् । योग्यतायाश्च यद्यन्नाधिक-

एवं व्याप्याकारवृत्तिप्रतिबिम्बरूपव्याप्यज्ञानोत्तरम्,

(कुञ्जिकाटीका)

*व्याप्याकारेति* । धूमाकारा या वृत्तिः तत्प्रतिबिम्बनमेव धूम-

(कलाटीका)

रणे प्रतियोग्यभविष्यत्तदा भूतलमिवाद्रक्ष्यतेति तर्करूपत्वेनानुपल-ब्धिस्वाविषयकतर्कज्ञानजन्यत्वात् । स्मृतौ स्वसमानविषयपूर्वानुभव-संस्कारजन्यायामतिव्याप्तिवारणार्थमग्रिमज्ञानमदमनुभवपरं बोध्यम् । एवं च प्रत्यभिज्ञायास्तत्तांशेऽपि नातिव्याप्तिः, तदंशे स्मृतित्वांगीकारात् । एवमपरोक्षज्ञानलक्षणव्यवस्थितौ तज्जन्यव्यवस्थितौ तज्जन्यव्यवहार-योग्यत्वमर्थापारोक्ष्यमितितन्निर्वचनं द्रष्टव्यमिति । अयं भावः । विशेष्यमा-त्रं विशेषणमात्रं चातिप्रसक्तम् । अन्यज्ञानत्वमव्याप्तिग्रस्तं ज्ञानाजन्य-ज्ञानत्वमपि तथेतिविशिष्टमुक्तम, ज्ञानस्य योऽविषयः स विषयो यस्ये-त्यर्थः । आदिनोपमितिः । अभ्युगम इत्यनेन प्रस्तुतो अयं दोष एव नेति सूचितम् ।

विषयस्यावच्छेदकत्वादाह *कोटीति* । यदित्यपि प्राग्वत् । पक्षा-न्तरमाह *बहुस्यामिति* । *उक्तेति* । चाक्षुषादिवृत्त्यभिव्यक्तचैतन्ये-ष्वित्यर्थः । ज्ञाने आद्येऽष्टसाधनताज्ञानस्य । नन्वेवमपि परम्परया तस्य तत्त्वमेवेति आह–*बुभुत्सेति* । *क्लृप्तेति* । श्रोत्रसन्निकर्षेत्यर्थः । सर्वमितिस्पष्टार्थम् । तत्र तस्या व्याप्तिज्ञानत्वावच्छिन्ने वा सामान्यत्वा-नुमितित्वेन ज्ञानद्वारा व्याप्तिविषयत्वम् । तदिति सर्वव्याप्तीत्यर्थः । घट-त्वजातिमान् य इतिप्रत्यक्षे तु नातिव्याप्तिः, विशेषणज्ञानस्याहेतुत्वात् । तदभ्युपगमेऽपि जातित्वरूपसामान्यधर्मावच्छिन्नतया घटत्वस्य स्वविष-यत्वेपि तन्मात्रावच्छिन्नतया स्वाविषयत्वे सामान्यधर्ममात्रानवच्छि-न्नतया तदविषयत्वस्य सत्वात् । एवं विशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षे-पि नाव्याप्तिः । ककारादेस्तत्वेन अवयवत्वेन च दर्शनात्, अन्यथाऽति-प्रसङ्गापत्तेः । लब्धिज्ञानस्य तज्जन्यज्ञानस्य । अयम्भावः । विशिष्टस्य प्र-माणोक्त्या उभयोः पृथक्कारणत्वं सूचितम् । तथा च तदभावे स्वविष-यकत्वेन दोषेपि तत्तदादाय तज्जन्यत्वात् नातिप्रसङ्ग इति योग्यत्वमि-ति । इदं फलोपहितं बोध्यम् । चरमवृत्त्युदयकालेऽपि विषयत्ववद् यो-ग्यत्वस्य सत्वमेवेति न दोषः । दीक्षितैरपि अद्वैतत्वप्रतिपादितत्वेन तदुक्तं तद्वृक्षमूलकीटकत्ववद्दुर्वचमिति दिक् ।

एवं प्रत्यक्षप्रक्रियामुक्त्वा ऽनुमित्यादिप्रक्रियामाह–*एवमिति* ।

शब्दाकारवृत्तिप्रतिबिम्बरूपशब्दज्ञानोत्तरं जायमानबौद्धव्यापकशब्दार्थरूपतत्तदर्थाकारवृत्तिप्रतिबिम्बनमेवानुमितिः शाब्दबोधश्च । शशशृङ्गालीकादिशब्दानां प्रातिपदिकत्वसिद्धिरपि बौद्धार्थकत्वेनैवोपपद्यते । "परः सन्निकर्षः" (अष्टा०सू० १।४।१०९) इति सूत्रे, "स्थानिवद्" (अष्टा०सू० १।१।५६) सूत्रे च भाष्ये स्पष्टमेतद् ।

(कुञ्जिकाटीका)

ज्ञानम् । तस्माद्बाह्याकारप्रतिबिम्बनमनुमितिः । *व्यापकेति* । व्यापकरूपो यः, स स पदार्थः, शब्दार्थरूपश्च यः, स स पदार्थस्तदाकारा वृत्तिरित्यर्थः । *शाब्दबोधश्चेति* । एवं शब्दाच्छाब्दबोधो ऽप्युक्तरीत्यर्थः । ननु शशशृङ्गादौ बाह्यार्थाभावात्कथमर्थवत्त्वमत आह *शशशृङ्गेति* । तदुक्तं हरिणा—

> व्यपदेशे पदार्थानां बाह्यसत्तौपचारिका ।
> सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥ इति ।

अर्थानां बाह्यानां व्यपदेशे व्यवहारार्थं बाह्यविलक्षणसत्ता बुद्धिसमाविष्टा । औपचारिका=आरोपप्रयोजनवती । सर्वास्वस्थास्वित्यनेन अतीतानागतानामपि बुद्ध्या प्रतिभासो दर्शितः । सर्वेषामित्यनेन शशशृङ्गादिशब्देऽपि तद्बुद्धिकल्पनया व्यवहारात् शब्दार्थसम्बन्धो नित्यो दर्शितः । अत एव बुद्ध्या शशशृङ्गमुद्दिश्य बाह्यसत्ताव्युदासाय नास्तीति प्रयुज्यते ।

(कलाटीका)

प्रत्यक्षवदित्यर्थः । *शब्दार्थेति* । तदुभयेत्यर्थः । यथासंख्यमत्र बोध्यम् । एवेन तदतिरिक्तत्वनिरासः । एवं ज्ञानप्रक्रियामुपपाद्य प्रक्रान्तबौद्धपदार्थस्वीकारस्य फलान्तरमप्याह *शशेति* । एवेन गत्यन्तरानिरासः । किञ्च आकाशो न पश्यतीत्याद्यप्युपपन्नम् । बौद्धतत्कर्तृकदर्शनस्य बाह्यतया ऽभावप्रतिपादनादिति बोध्यम् । अत्र मानान्तरमप्याह *पर इत्यादि* । *एतत्* । बौद्धपदार्थ एव ज्ञानविषय इत्येतत् । तत्र आद्ये तत्सूत्रं तत्सत्त्व एव सङ्गच्छते, अन्यथाऽऽशुविनाशिनां शब्दानां सन्निकर्षो बाह्यो दुरुपपाद एवेत्युक्तम् । अन्त्ये 'प्राचीनं ग्रामादाम्रा इत्युपदेशे तस्य सर्वत्राम्रबुद्धिः प्रसक्ता ततो ये क्षीरिणो ऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इत्युपदेशेन तत्राम्रबुद्ध्या न्यग्रोधबुद्धिः प्रतिपद्यते । ततः स पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रो-

ईदृशानामप्यन्तःकरणे वासनासत्त्वे शाब्दबोध एव मानम् । पूर्वपूर्वबोधैर्वासनाजननाच्च अनादित्वाच्च व्यवहारस्य न दोषः ।

तदुक्तं हरिणा—

**यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।**
**स बाह्यं वस्त्विति ज्ञातः शब्दार्थः सम्यगिष्यते ॥ इति ।**

'अबहीरूपोऽपि बहीरूपतया ऽध्यस्त' इति पुञ्जराजः । अध्यासे बीजं चान्तःकरणस्य रागादिदोष एव ।

---

( कुञ्चिकाटीका )

ननु शशशृङ्गादिशब्दे ऽर्थस्य कल्पितत्वात्तत्र वासनासत्त्वे मानाभाव इत्यत आह *बोध एवेति* । कथं तत्र वासना जन्यत इति चेत्तत्राह *पूर्वेति* । पूर्वकाले ऽपि कथमत आह *अनादित्वादिति* । *न दोषः* न वासनाऽनुपपत्तिः ।

केचित् शशशृङ्गादिशुक्तिरजतादिविषये बहिरसतोऽपि बुद्धिविषयत्वादसत्ख्यातिरिति व्यवहरन्ति ।

पुरोवर्त्तिनः स्वरूपेण सत्त्वाद्बाह्यरजताकारेण चासत्त्वात् सदसत्ख्यातिरिति साङ्ख्याः ।

ज्ञानसन्तानस्यैवात्मत्वमभ्युपगच्छतां वैभाषिकादीनाम् आत्मख्यातिरिति व्यवहारः ।

रजतत्वेन शुक्तिप्रतीतेरन्यथाख्यातिरिति तार्किकाः ।

*यो वार्थ इति* । वाशब्दः पक्षान्तरे । बुद्ध्युपारूढस्य शब्दस्य बाह्यवस्तुनिबन्धनो बुद्ध्युपारूढो यो ऽर्थः स बाह्यवस्त्वित्यध्यस्तः सन् शब्दार्थः । यथा अन्तरः स्फोटो वाचकः, तथा ऽर्थो ऽप्यान्तर एवेति भावः । नन्वत्राध्यासे बीजाभाव इत्यत आह *रागादिदोष इति* । त-

( कलाटीका )

थांश्चोपाधीयमानान्'इत्युक्तम्'आम्रबुद्ध्या इत्यस्य' तां सन्त्यज्येत्यर्थः ।

ननु शशशृङ्गादीनां बाह्यसत्त्वाभावेन तद्वासनायां किं मानमत आह *ईदृशानामिति* । अबाह्यानामपि तेषामित्यर्थः । नन्वेवमपि तज्जनकं किमत आह *पूर्वेति* । नन्वेवमप्याद्यबोधे दोषोऽत आह *अनादित्वादिति* । व्यवहारदशायामिति भावः । *योवेति* । वाशब्दः समुच्चये । बाह्यवस्तुनिबन्धन इति पाठः । बाह्यवस्तुनिबन्धनं संवादिरूपं यस्य । निर्मूलत्वं निराचष्टे *अध्यास इति* । *न भवति* । स

अत एव बाह्यपदार्थानयनमुपपन्नम् । यत्र चाभ्यन्तरार्थस्य बाह्यार्थेन संवादः स शब्दः प्रमाणम्, विसंवादे त्वप्रमाणमिति व्यवस्था । एवमेव 'अयं शब्दः प्रमाणं न वा' इत्यादेः, 'इदं ज्ञानं प्रमा न वा' इत्यादेश्चोपपत्तिः ।

नलादिपदेभ्योऽपि बौद्धाकारविषयक एव बोधः । स च बौद्ध आकारः सामान्यत एव, अवयवसंस्थानगतविशेषाग्रहात् ।

तेषां शक्तिग्रहोऽपि वक्तृमुखात्तदीयगुणसमृद्ध्या

( कुञ्जिकाटीका )

द्रशादेव प्रवृत्तिरिति भावः । "सुखानुशयी रागः" इति पातञ्जलसूत्रम् । सुखे तत्कारणे वा तृष्णा राग इति तदर्थः । *अत एव* । बाह्ये अध्यासादेव । *संवादः* । ऐक्यम् । *एवमेवेति* । संवादित्वासंवादित्वाभ्यामेवेत्यर्थः । ज्ञाने संवादो नाम यथार्थविषयकत्वम् । *प्रमाणमिति* । बाह्यार्थसंवादीत्यर्थः ।

ननु नलादिशब्दानामाधुनिकत्वात्तत्र कथं वासना कथं वा बौद्धबाह्ययोरध्यास इत्यत आह *नलादीति* । *बौद्धेति* । अस्ति हि आकारविषयिणी वासना अनादिः । ननु अज्ञातस्य आकारोऽपि कथं बुद्धिस्थ इत्यत आह *सचेति* । सामान्याकारस्य सर्वत्रानुमानादिना बुद्धिस्थत्वादिति भावः । *तेषाम्* । नलादिपदानाम् । *शक्ति*

( कलाटीका )

तत्वेन ज्ञातः सन् शब्दार्थः सम्यग्घटादिवदिष्यते न तु भवतीत्यर्थः । तदाह *अबहीरूपोपीति* । तस्य निर्मूलत्वं निराचष्टे *अध्यास इति* । *अतएव* रागादिदुष्टान्तःकरणेन बाह्यान्तरार्थयोः संमुग्धत्वेनैव ग्रहणादेव । नन्वेवं सर्वस्यापि शब्दस्य प्रामाण्यं स्यादत आह *यत्रहीति* । *तेषामिति* । नलादिपदानामित्यर्थः । भूताद्यन्यतमकाले इतिशेषः । अत एव नलादौ न दोषः। संशयबीजकोटिद्वयमपीदमेव नत्वन्यदित्याह *एवमेवेति* ।

तस्य फलान्तरमाह *नलादीति* । *आकारः* । बाह्यत्वेनाभिमतः । शक्तिग्रहपदार्थोपस्थितिबोधानां समानप्रकारकत्वात्तं विना तदसम्भवात्तस्य प्रत्यक्षेण ग्रहणं विना सम्भवात् सोपायं तमाह—*तेषामिति* । नलादिपदानामित्यर्थः । आदिना क्रियासमृद्धिः । युक्तं चैतत् ।

दिश्रवणानन्तरं तादृशगुणसमृद्ध्यादिविशिष्टे सामान्यतो बुद्ध्या गृहीते आकार एव। "हेतुमति च" (अष्टा० सू० ३।१। २६) इति सूत्रे भाष्ये 'कंसं घातयति' इत्येतदुपपादनावसरे 'तेषामुत्पत्तिप्रभृत्याविनाशादृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इत्युक्तेः।

तदुक्तं हरिणा—

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।

( कुञ्चिकाटीका )

अहोऽपीति* । बुद्ध्या गृहीते आकारे इत्यत्रान्वयः । *व्युत्पादनावसर इति* । चित्रपुस्तकादौ हि प्रतिकृतिरूपस्य प्रयोज्यप्रयोजकभावाध्यवसायात्'कंसं घातयति'इति सिद्धम्। यदा तु कंसाद्यनुकारेण सादृश्याश्नटानां तद्रूपताप्रतीतिः,तत्र प्राथमिकेषु कथमिति तत्र प्रश्नः। *तेषामुत्पत्तीति*। कंसादीनाम्। ऋद्धीर्व्याचक्षाणाः कथका बुद्धिविषयान् प्रकाशयन्ति, चिरकालातीतानां(१) बहिरसत्त्वात् बुद्धिगोचरतया विद्यमानान् प्रकाशयन्ति । तथा च कथकैः श्रोतरि कंसाद्याकारप्रत्ययजननाद् बुद्धिवासुदेवेन कंसं घातयतीति प्रयोजकत्वोपपत्तिः। तथा च सूत्रेणैव सिद्धत्वाद्वार्तिकं नारब्धव्यमिति भावः। एवं च बुद्धिविषयसत्त्वैव सर्वोऽपि व्यवहार इति फलितम्।

*शब्दोपहितेति*। शब्दसमर्पितबुद्धिविषयाकारानित्यर्थः। *सा-

( कलाटीका )

समृद्ध्यादेरतिप्रसक्तत्वादाह—*तादृशेति*। विलक्षणेत्यर्थः। अस्य निर्मूलत्वं निराचष्टे-*हेतुमतीति*। *तेषाम्* । कंसादीनाम्। *आचक्षाणाः*। पौराणिकाः। सत्त्वं बुद्धिविषयत्वेनेत्याह-*बुद्धीति*। अत एव नृत्यदर्शनं पुराणश्रवणं च कृतवतां दर्शनाद्यर्थं गच्छतोऽन्यान्सामाजिकान्प्रति 'गच्छ हन्यते कंसः' 'गच्छ घानिष्यते कंसः', 'किङ्तेन, हतः स' इत्यादिव्यवहारः। अन्यथा चिरहते कंसे हन्यते इत्यादिव्यवहारानुपपत्तिरेव । हन्तेस्तद्धननाभिनये तत्प्रतिपादकग्रन्थकथने वा लक्षणेति तु न युक्तम्। बौद्धकंसस्य बौद्धकृष्णेन बौद्धहननमित्येवमन्यथैवोपपत्तेरिति भावः।

---

(१) 'कंसादीनाम्' इति ग० पु० पाठः।

प्रत्यक्षमिव कंसादीन्साधनत्वेन मन्यते ॥
बुद्धिप्रवृ(१)त्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना ॥ इति ।

प्रत्यक्षमिति मननक्रियाविशेषणम् । इन्द्रियजज्ञानाभावादिवेति । अर्थेषु=बाह्येषु । बौद्धमेवैकस्य शक्तिनानात्वं बाह्येऽध्यस्यते, दृश्यज्ञानविषययोरभेदाध्यासात् । अत एव देशान्तरस्थं देवदत्तं काश्यां शृण्वतस्तं च तत्र पश्यतो ऽपि 'देवदत्तो ऽत्र नास्ति' इत्यतो धीः सामान्येन बौद्धाकारेण, अस्य विजातीयतया संमुग्ध-

(कुञ्जिकाटीका)

धनत्वेनेति* । बुद्धिविषयवधादेरित्यर्थः । तदेवं बुद्ध्या व्यवहारमुपपाद्यैकस्यापि वस्तुनः शक्तिनानात्वं बौद्धमित्याह *बुद्धीति* । बुद्धेः प्रवृत्तिर्व्यापारः परिच्छेदलक्षणः, तस्या रूपमाकारः, अविद्यया भासमानस्तमर्थेषु बाह्येष्वध्यस्य तेषां शक्तिनानात्वं कल्प्यते । तथा च बौद्धशक्तिभेद एव बाह्यशक्तिभेदः । एवं च क्रियाभेदाद्वस्त्वेवं नानाशक्तिकमवधार्यते । *क्रियाविशेषणमिति* । इन्द्रियनिमित्तेन ज्ञानेन परिस्फुटार्थमवधारयतीत्यर्थ इति भावः । इवार्थमाह *इन्द्रियजेति* । इन्द्रियजन्यमिदं ज्ञानं न भवतीति हेतोः प्रत्यक्षमिवेति इवशब्दः प्रयुक्त इत्यर्थः । *दृश्येति* । बाह्येत्यर्थः । *ज्ञानविषय* । बौद्धः । *अत एव* । बौद्धसामान्याकारे शक्तिग्रहादेव । 'देशान्तरे वर्तते' इत्यपरिचितं देवदत्तं श्रुतवतः काशीस्थपुंसः काश्यां देवदत्ते सत्यपि 'काश्यां देवदत्तो नास्ति' इति वाक्याद्बोधो भवत्येव । बुद्धिस्थस्य सामान्याकारस्य बाह्याकारे ऽध्यासाभावादित्यर्थः । *संमुग्धत्वेन* ।

(कलाटीका)

*शब्दोपेति* । तज्जन्यप्रतीतिविषयानित्यर्थः । *साधनत्वेन* । कर्मकारकत्वादिना । *बुद्धिप्रवृत्तम्* । बुद्ध्यारूढम् । प्रत्यक्षस्य कंसादिविशेषणत्वे प्रत्यक्षानित्युचितमत आह—*प्रत्यक्षमितीति* । अत एव इवः सफल इत्याह *इन्द्रियेति* । *एकस्य* । कंसादिशब्दस्य । *ज्ञानेति* । बुद्धीत्यर्थः । प्रतिपादितमिदं प्रागपि । *तत्र* । काश्यामग्रेऽपि ।

(१) कलाऽनुरोधी कखमूलपुस्तकयोः 'प्रवृत्तंरूपम्' इति पाठः ।

त्वेनाग्रहात् । 'अयं स देवदत्तः' इत्युपदेशोत्तरं सामा-न्यरूपोऽपि बौद्ध आकारो विशेषरूपेण विवर्तते ।

एतेनातीतनलादिभाविचैत्रादिवर्तमानप्रसिद्धासन्निकृष्टवस्तुगोचराः संस्कारा अनादयो धारारूपेण विशिष्य बोधानुपपत्त्या कल्प्यन्ते, तैः स्मृतेष्वर्थेषु शक्तिग्रहो बोधश्चेति नैयायिकनव्योक्तमपास्तम् । विशिष्य बोधरूपहेत्वसिद्धेः । विशिष्य गृहीतसङ्गतिकानामिव त-

( कुञ्जिकाटीका )

अभिन्नत्वेन । *अस्य* । काशीस्थस्य । ननूपदेशात् 'सोऽयम्' इति बुद्धिः कथमत आह *अयं स इति* । (१)*विजातीयेति* । एतच्च संमुग्धत्वे हेतुः । मोहश्चाज्ञानम् । तथाच मोहाद् द्वयोराकारयोरैक्यग्रह इत्यर्थः । *सः* । देशान्तरस्थः । अयमेवेत्यर्थः । *बौद्ध इति* । तत्रो-पदेशानन्तरं बौद्ध आकारो बाह्यरूपो भवतीत्यर्थः । *अतीतनलादी-ति* ।अतीतनलादिविषये नलत्वादिप्रकारकः शक्तिग्रहो न सम्भवति, नलत्वादिना पूर्वमज्ञातत्वात्, किन्तु प्रमेयवानित्येव प्रमेयप्रकारकः । प्रमेयवानित्यनुभवे प्रमेयत्वेन नलत्वविशिष्टस्यापि पूर्वमनुभवोऽस्ति । एवं चादृष्टविशेषस्य प्रमेयत्वांशे उद्बोधकत्वाकल्पनेन केवलचैत्रत्व-विशिष्टस्मरणमिति प्राञ्चः ।

तन्न । 'जातिमान्' इति अनुभवोत्तरं 'घटः' इति स्मरणापत्तेः । नहि तत्र कस्योद्बोधकत्वमस्ति कस्य नेत्यत्र नियामकमस्ति । अत-स्तत्र संस्कारधाराकल्पनेनैव स्मृतिरिति नव्याः ।

*भावीति* । नलादिर्योऽतीतः, यश्च भावी चैत्रादिः, यश्च प्रसिद्धो वर्तमानोऽपि असन्निकृष्टः, इत्येतेषां द्वन्द्वः । *हेत्वसिद्धेरिति* । विशि-

( कलाटीका )

अत एवेत्यस्यार्थमाह *सामेति* । *गोचराः* । एतन्निष्ठगोचराः । तज्जनकाभावादाह—*अनादय इति* । सर्वदा तज्ज्ञानस्य जननादाह *धारेति* । *अर्थेषु* । नलत्वादिविशिष्टनलादिषु । *बोधश्च* । तेषामेव । एतेनेत्यस्यार्थमाह *विशिष्येति* । भाव्यादिविषये दोषा-न्तरमाह *विशिष्येति* । घटादीनामित्यर्थः । दर्शन इति शेषः ।

(१) 'विजाती-त्यर्थ.' पाठोऽयं कुं० कपु० नास्ति ।

दर्शने पदस्मरणापत्तेश्च । पदप्रकारकबोधस्यैवानुभवाच्च ।

अत एव अज्ञातार्थकोऽपिदमेकं पदमिति ज्ञातेषु नलचैत्रगवयादिपदेषु श्रुतेषु क एतदर्थ इति प्रश्न उपमानतल्लक्षणादिना प्रतिवचनं च दृश्यते । अत एव सादृश्याद्युपायेन शक्तिबोधकतया उपमानस्य, प्रसिद्धपदसामानाधिकरण्यात्तत्तद्बोधकतया कोशस्य च प्रामाण्यं व्युत्पादयन्ति ।

( कुञ्जिकाटीका )

स्य बोधाभावेन तन्मूलकसंस्कारकल्पनाया असम्भवादिति भावः । *गृहीतेति* । घटदर्शने घटपदस्मरणवदपूर्वचैत्रादिदर्शनेऽपि तद्वाचकपदस्मरणापत्तेरित्यर्थः । *पदप्रकारकेति* । नलपदवाच्यः कश्चिदासीदित्याकारकेत्यर्थः । *एकं पदमितीति* । एतादृशो व्यवहार इति शेषः । *ज्ञातेष्विति* । तार्किकमते तु नलशब्दे ज्ञाते तदर्थस्यापि ज्ञातत्वात्प्रश्नानुपपत्तिः । *उपमानस्येति* । प्रामाण्यमित्यत्रान्वयः ।

तत्र हि—'गोसदृशो गवयपदवाच्यः' इत्युपमानाद् 'गवयो गवयपदवाच्यः' इति शक्तिग्रहः । सादृश्यादीत्यादिना वैधर्म्यपरिग्रहः । यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्याद् उष्ट्रे करभपदवाच्यताग्रहः(१) ।

*सामानाधिकरण्यात्* । वाच्यतया एकार्थवृत्तित्वात् । *शक्ति·

( कलाटीका )

साधारणदोषान्तरमाह *पदेति* ।

एतेन नलादिपदान्नलादिशब्दार्थत्वादिप्रकारक एव शाब्दबोधो लक्षणया । न च नलत्वादिविशिष्टे शक्त्यग्रहात्तत्सम्बन्धरूपलक्षणाग्रहोऽपि कथम् ! सामान्यरूपेण तत्रापि शक्तिग्रहसत्त्वादिति तन्नव्योक्तमपास्तम् ।

इदं समूलयति *अत एवेति* । (२)सामान्यतस्तथा बोधादेवेत्यर्थः । एवमग्रेऽपि । विशेषजिज्ञासोपपत्तये आह *इदमेकमिति* । *तल्लक्षणेति* । लम्बकर्णत्वादीत्यर्थः । सामान्यज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात् । त्वन्मते तूक्तरीत्याऽऽदावेव विशिष्यैव बोधेन प्रश्ना·

( १ ) 'इति वात्स्यायन' इति ग० पु० पाठः ।

( २ ) 'विशिष्यबोधाभावादेवेत्यर्थः' इति ख० पु० पाठः ।

नलत्वादिना बोधस्तु तेन रूपेण शक्तिग्रहासम्भवादसम्भवी ।

एतेन प्रमेयत्वादिरूपेण सर्वानुभवसत्त्वात् तत्र प्रमेयत्वांशस्य अनुद्बुद्धसंस्कारत्वेन मोषे प्रथमतः तत्तज्जात्यादिरूपं निर्विकल्पकस्मरणं ततो ज्ञानलक्षणया विशिष्टतत्तत्पदार्थोपस्थितौ तत्र शक्तिग्रहो बोधश्च । ज्ञानलक्षणा च मनःसंयुक्तात्मवृत्तिसंस्कारविषयत्वम् । फलबलकल्प्योद्बोधकवशात्स्मृतेः काचित्कत्वकादाचि-

( कुञ्जिकाटीका )

ग्रहासम्भवादिति* । नलत्वेन रूपेण पूर्वमनुपस्थितेः। *मोषे* । अग्रहे । तदंशे ऽन्याप्रकारकस्मृतिं प्रति तदंशेऽन्याप्रकारकत्वेन तु नानुभवस्य हेतुत्वम्, मानाभावात् । नचैवं जातिमत्त्वादिरूपेण घटाद्यनुभवेऽन्यांशे उद्बोधकालाभे 'घटः' इति स्मरणापत्तिरिति वाच्यम् । उद्बोधकलाभालाभयोः फलबलकल्प्यत्वात् इति भावः । *तत्तज्जात्यादीति* । चैत्रत्वादीत्यर्थः । *निर्विकल्पकमिति* । यथा बालानां स्तनपानादाविष्टसाधनतायाः पूर्वानुभूतायां स्मरणेऽदृष्टविशेष एव नियामकः, तथाऽपूर्वचैत्रत्वादिस्मरणेऽपीत्यर्थः । *आत्मवृत्तीति* । आत्मनिष्ठेत्यर्थः । (१)'सुरभि चन्दनं पश्यामि' इत्यादौ सौरभाद्यंशे संस्का-

( कलाटीका )

द्यसङ्गतिः स्पष्टैव । (२)आदिनाऽतिदेशवाक्यार्थज्ञानम् । अन्यथोक्तरीत्यैव तत्रापि निर्वाहे तदप्रामाण्यापत्तिः स्पष्टैव । घटादितुल्यतां निराचष्टे *नलत्वादीति* । तदुक्त्यन्तरं खण्डयति—*एतेन* । तथा बोधासम्भवेनेत्यर्थः । *तत्र* । तथानुभवविषये । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादाह *प्रथमत इति*। आदिना गुणादि । *तत्र*। विशिष्टे । *बोधश्च* । विशिष्टस्य । ननु जात्यादिज्ञानं कथं तस्य प्रत्यासत्तिरत आह—*ज्ञानेति* । चक्षुर्जन्यज्ञाने विषयतासम्पादकतत्स्मृतिसंस्कारजनकानुभवविषयत्वमित्यर्थः । ननु प्रमेयत्वेन सर्वानुभवे सार्वज्ञापत्तिरत आह *फलबलेति* । देशतः कालतश्चातत्त्वायाह *काचित्कत्वेति* । एकदोषस्योक्तत्वाद्दोषान्तरमाह

(१) 'सुरभिचन्दनम्' इत्यादिः—'भावः' इत्यन्तः पाठः ग० पु० नास्ति ।

(२) 'आदिना कोषादिकथनम्–अन्यथा' इति ख० पु० पाठः ।

ङ्कत्वनियमेन न सार्वज्ञ्यापत्तिरित्यपास्तम् । अनुभव-
विरुद्धत्वात्तादृशस्मरणकल्पने मानाभावाच्च । सर्वत्र स्मरणे-
ऽनुभवसमानाकारत्वस्यैव दर्शनात् ।

किञ्च तद्दंशमोषेऽपि(१)विशिष्य जातानुभवानामे-
व तथा ज्ञानं भवति नतु कदाचिदपि तथाऽननुभूतानां
तथा ज्ञानं ज्ञानलक्षणासहकारेणापि । अनुभवविरोधा-
त् । अन्यथा ब्रह्मणोऽपि तथा स्मरणे ज्ञानलक्षणया

( कुञ्जिकाटीका )

रस्य या विषयता सैव ज्ञानलक्षणा प्रत्यासत्तिः सैव सौरभस्मृतौ हेतु-
रिति भावः । *न सार्वज्ञ्यापत्तिरिति* । प्रमेयत्वेन ज्ञानेऽपि विशिष्य-
ज्ञानाभावान्न सर्वज्ञतापत्तिरित्यर्थः । *तादृशेति* । प्रमेयत्वरूपेणानु-
भवाच्चैत्रत्वरूपेण स्मरणेत्यर्थः । *अनुभवसमानाकारत्वस्यैवेति* ।

तथा च पातञ्जलसूत्रम् "जातिदेशकालव्यवहितानामप्यानन्तर्यं
स्मृतिसंस्कारयोरेकरूपत्वाद्" इति । जातिव्यवहितत्वं जन्मान्तरयो-
गेन । तत्र जन्मान्तराऽनुभूतस्मरणमञ्जनादिना । देशादिव्यवधानं
दूरत्वादिना । नच सुषुप्तिदशायामनुभवाभावात् 'सुखमहमस्वाप्सं
न किञ्चिदवेदिषम्' इतिस्मरणानुपपत्तिरिति वाच्यम् । एतदर्थमेव
निद्राया वृत्तिविशेषत्वस्यैव स्वीकारात् । एतेन ज्ञानसामान्यभावो
निद्रेति तार्किकोक्तमपास्तम् ।

ननु तद्विषयकस्मृतौ तद्विषयकानुभवहेतुतायां व्यभिचारवारणा-
याव्यवहितोत्तरत्वं वैजात्यं वा निवेश्यमित्यस्वरसादाह *किञ्च तद्दं-
शेति* । यस्य कस्य चिद्विशिष्यानुभवो जातो ऽस्ति तस्यैव ज्ञानलक्ष-
णयाऽपि ज्ञानं भवतीत्यर्थः । *नत्विति* । तथाऽननुभूतानां ज्ञानलक्ष-
णया ऽपि न तथा ज्ञानमित्यन्वयः । *ब्रह्मणो ऽपीति* । अस्मदादीनां
सामान्यलक्षणया ब्रह्मणा ऽप्यनुभावान्मुक्तत्वापत्तिरित्यर्थः ।

( कलाटीका )

*अनुभवेति* । अनुभवविरुद्धत्वे हेतुमाह*सर्वत्रेति* ।

तथा बोधांशे ऽनुभवविरुद्धत्वमाह *किञ्चेति* । विपक्षे बाधक-
मप्याह *अन्यथेति* । इष्टापत्तौ श्रवणादेर्योगादेः काशीमरणादेरानर्थ-
क्यापत्त्या तद्बोधकश्रुतिस्मृतिपुराणशास्त्रानर्थक्यापत्तिः, वैषम्ये बीजा-

( १ ) 'कदाचित्' इति पाठः ख. पुस्तके ।

तथा ऽनुभवे च कृतकृत्यतापत्तिरित्यलम् ।

यत्र तु न गुणसमृद्ध्यादिश्रवणं तत्र पदमात्रविषयकमेव ज्ञानम् । अत एव 'पदं श्रुतमर्थं तु न जानामि' इति व्यवहारस्तत्र । गुणादिश्रवणोत्तरं तु 'श्रुतो ऽस्ति स न दृष्ट' इति व्यवहारः । अस्य कश्चिदर्थो भविष्यतीति पदत्वहेतुकमनुमानमेव । बौद्धार्थस्य बौद्धेन शब्देनाविभागात्तन्मूलाभेदाध्यवसायेन शब्दादर्थाकारवृत्तौ जायमानायां स्वाकारस्यापि समर्पणामिति शब्दस्यापि विषयता । अत एव शब्दे ग्राह्यत्वग्राहकत्वरूपशक्तिद्वयस्वीकारः । तत्र तात्पर्यवशाद्बहुधा शब्दप्रकारको बोधः । अर्थे बाधे(१) तु 'गौरित्ययमाह'इत्यादौ अनुवादे शब्दविशेष्यकः । अनुकरणे शब्दमात्र-

( कुञ्जिकाटीका )

*बहुधेति* । नलादिपदघटादिपदेभ्यो विशेष्यस्यानेकधा भानात् । (२)उपमितौ अयं गवयपदवाच्य इत्यादिना बहुविधत्वात् । *अर्थबाधेत्विति* । अर्थस्योच्चारणासम्भवात् । *शब्दविशेष्यक

( कलाटीका )

भावः, अत एव सार्वज्ञ्यापत्तिश्च । तदाह *इत्यलमिति* ।

तुरुक्तवैलक्षण्ये । ननु सामान्यतो ऽत्रापि अर्थज्ञानमतमाह—*अस्येति* । अयं ( शब्दः ) सार्थकः पदत्वात् घटादिशब्दवत् । नलादिपदं किञ्चिद्वाचकं साधुपदत्वादिति वा । एवेन शाब्दत्वनिरासस्तत्र । 'अथैवंशब्दोपि' इति शब्दस्य प्रागुक्तस्वप्रकाशत्वमुक्ताङ्गीकारणैवेत्युपपादयति *बौद्धार्थेति* । तयोस्तद्रूपत्वादित्यर्थः । *तन्मूलेति* । बाह्यशब्दार्थयोरित्यर्थः । *अत एव* । शाब्दे तस्यापि विषयत्वादेव । ऐकरूप्येण सर्वत्र तथाऽसत्त्वादाह *तत्रेति* । तस्य तद्विषयत्वे इत्यर्थः । आदिना "अग्नेर्ढक्" इत्यादि । अत एव तत्रार्थवद् गौणमुख्येत्यादिन्यायविषयता । एवञ्च तत्रानुवादत्वव्यवहारो नानुकरणव्यवहारः । शब्दमात्रबोधतात्पर्यकोच्चारणाभावादत आह—*अनुकेति* । 'गवित्ययमाह''भूसत्तायाम्' इत्यादावित्यर्थः । अत एव-

(१) 'अर्थबाधे' इतिपाठः कखपु० । (२) 'उप' इत्यादि त्वाउ' इत्यन्त पाठः खपु०नास्ति ।

विशेष्यकः ।

तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।

उत्तरार्द्धेनानुव्यवसाये प्रमाणं दर्शितम् । अत एव चक्षुषा दृश्यमानमप्यज्ञातबोधकं पदार्थं 'किमिदमिति न जानामि' इति व्यवहरन्ति । तदुपदेशे च 'ज्ञातम्' इति व्यवहरन्ति ।

( कुञ्जिकाटीका )

इति* । अर्थविशिष्टशब्दबोध इत्यर्थः । *शब्दमात्रेति* । तत्रार्थस्य अप्रतीतिरेव । *अत एवेति* । शब्दार्थयोरभेदादेवेत्यर्थः । *अनुविद्धमिति* । शब्दार्थयोरभेदे शब्दपूर्वकत्वस्यैव न्याय्यत्वात् । *अनुव्यवसाये प्रमाणमिति* । प्रत्यक्षे शब्दादीनां विषयत्वासम्भवात्तदुत्तरोत्पन्नेऽनुव्यवसाये शब्दो विषय इत्यर्थः । (१)तथाचानुव्यवसायस्य प्रामाणिकत्वं दर्शितमित्यर्थः । अनुव्यसाय एव ज्ञानस्य भानादुक्तम् *उत्तरार्द्धेति* । *अत एव* । (२)शब्दानुविद्धत्वादेव । *अज्ञातबोधकमिति* । न ज्ञातो बोधको वाचको यस्य तम् । (३)शब्दानुविद्धस्यैव

( कलाटीका )

तुः । एवं शाब्दे उक्त्वा प्रत्यक्षादावप्याह *एवमिति* । तद्वदित्यर्थः । *अत एव* । अविभागमूलाभेदाध्यवसायादेव । *विद्धम* । विद्धमेव । *तदुक्तम्* । हरिणा । *प्रत्ययः* । विशिष्टज्ञानम् । *शब्दानुगमात्* । शब्दविषयकत्वात् । इदमेव तदनुविद्धत्वम् । प्रत्यक्षादौ तदसत्त्वादाह *इवेति* । इवशब्दोऽवधारणे ।

इवौपम्ये परिभवे ईषदर्थेऽवधारणे ।

इति कोशात् । भासत इत्युक्तिस्वारस्यादाह । *उत्तरेति* । *अत एव* । पौनरुक्त्यमपि न । इदमनुपदमेव किञ्च पिकेत्यनेन स्फुटीभविष्यति । *अत एवेति* । तस्य तदनुविद्धत्वादेव । *बोधक* । शब्दः । अन्यथाऽर्थदर्शनसत्त्वेनैतदसङ्गतिः स्पष्टैव । तस्मात्तदंशमादायैवमिति भावः ।

(१) तथा—त्यर्थ· पाठोऽयं कुं० कपु० नास्ति ।

(२) 'अत एव । बोधे पदप्रकारकत्वनियमादेव' इति ग० पु० पाठ ।

(३) 'शब्द' इत्यादि· र्थेत्यन्त पाठ ग० पु० नास्ति ।

एतेन मणिमन्त्रादिन्यायेन तत्पदवाच्यत्वग्रहो विशेषधर्मप्रकारेण ज्ञाने तथा व्यवहारे ऽनुव्यवसाये च हेतुरिति नैयायिकनव्योक्तमपास्तम् ।

मणिमन्त्रादिन्यायेन कारणत्वकल्पनापेक्षयाऽस्मदुक्तस्यैवौचित्यात् । तद्ग्रहे सति स्मृतस्य तस्य भाने बाधकाभावात् । तदर्थं प्रतिबन्धककल्पने गौरवम्, अनुभवविरोधश्च ।

किञ्च, पिकपदशक्तिग्रहवतः 'अयं कोकिल' इत्यनुव्यवसायापत्तिः । तव पिकत्वकोकिलत्वयोरभेदात् । मम

( कुञ्जिकाटीका )

भानाद् वाचकशब्दाज्ञाने ऽर्थस्याप्यज्ञातत्वव्यवहार इत्यर्थः ।

*मणिमन्त्रादीति* । अयं भावः 'ह्रदो वह्न्यभाववान्' इतिनिश्चयानन्तरं 'ह्रदो वह्निमान्' इति बुद्धेरनुदयात्तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः । तत्र च ग्राह्याभावानवगाहित्वेऽपि यथा दाहं प्रति मण्यादेर्विशिष्यैव प्रतिबन्धकता, एवं चैत्रत्वादिना विशिष्य शक्तिग्रहाद् बोधादिरित्यर्थः ।

*अस्मदुक्तेति* । बौद्धाकारेति प्रागुक्तत्वात् । *तद्ग्रहे* । तदर्थग्रहे । *तस्य* । शब्दस्य । *बाधकाभावादिति* । शब्दार्थयोर्नित्यसम्बन्धित्वात् । पदाभाने दोषान्तरमाह *किं चेति* । *नामेति* । नामविषयकत्वं संसर्गविषयकत्वं चेत्यर्थः । चाक्षुषेऽपि नामवैशिष्ट्यम-

( कलाटीका )

मिथोव्यभिचारवारणायाव्यवहितोत्तरत्वानिवेशेन कार्यकारणभाव इत्याह—*मणीति* । *तदिति* । घटादीत्यर्थः । *विशेषधर्मेति* । तत्पदरूपेत्यर्थः । *तथेति* । अव्यवहितोक्तेत्यर्थः । *अनुव्येति* । तस्यैव तथैवानुभूयमानत्वात् । अत एव प्रमाणदर्शनसङ्गतिः । एवं च शब्दविषयकत्वेन मानफले इतिभावः । एतेनेत्यस्यार्थमाह *मणीति* । औचित्ये हेतुमाह *तद्ग्रहे सतीति* । तत्तत्पदवाच्यत्वग्रहे सतीत्यर्थः । *तस्य* । शब्दस्य । *तदर्थम्*(१) । विशेषधर्मप्रकारकबोधार्थम् । अभ्युपेत्यापि गौरवादिकमाह—*किञ्चेति* । *कोकिल

(१) *'तत्तदर्थम्* । उक्तकार्यकारणभावनिर्वाहार्थं तत्तत्पदस्मृत्यंशे इति भावः' । इति ख॰पु॰ पाठः ।

तु तत्तत्पदभानान्न दोषः ।

अत एव कणादसूत्रवृत्तिकृद्भिः कीर्तिदिङ्नागादिभिः 'नामसंसर्गविषयकत्वम्' सविकल्पकलक्षणमुक्तम् । पातञ्जलानामप्येवमेव सविकल्पकलक्षणं संमतम् ।

एतेन ज्ञानं शब्दानुविद्धमेव, अर्थज्ञानस्य वाचकशब्दाभावात् । अर्थवाचकेनेतिकरणयुक्तेन 'घट इति जानामि' इति तद्व्यवहार इत्यपास्तम् ।

"इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभि-

( कुञ्जिकाटीका )

स्त्येव । सुरभि चन्दनमितिवन्नामांशे उपनीतभानसम्भवात् । नामांशे स्मरणं वा । अभावज्ञाने प्रतियोगिस्मरणवत् । *वाचकशब्दाभावादिति* । पदार्थादिज्ञानस्य शब्दवाच्यत्वाभावादित्यर्थः । तथा च न शब्दानुविद्धं ज्ञानम्, ज्ञानशब्दयोः सम्बन्धित्वात् । *इतिकरणेति* । घटार्थवाचक इतिकरणयुक्तो यो घटादिशब्दः तेन ज्ञानस्य व्यवहार इत्यर्थः । *इन्द्रियार्थेति* । इन्द्रियविषयसन्निकर्षेणोत्पन्नमित्यर्थः । यद्यपि मनोरूपेन्द्रियजन्यं सर्वं ज्ञानं तथापीन्द्रियत्वावच्छिन्नजनकता विवक्षिता । मानसप्रत्यक्षे तु मनस्त्वेन जनकता । ईश्वरप्रत्यक्षस्य त्वजन्यत्वेऽपि जन्यप्रत्यक्षस्यैवेदं लक्षणम् । *अव्यभिचारीति* । भ्रमभिन्नमित्यर्थः। प्रत्यक्षं विभजते *अव्यपदेश्यमिति* । निर्विकल्पकमित्यर्थः।

( कलाटीका )

इति* । जानामीति शेषः(१) । *तत्तत्पदेति* । अत एवोक्तद्वन्द्वोपपत्तिरिति बोध्यम् । शब्दानुविद्धत्वं परसम्मतमपीत्याह *अतएवेति* । शब्दविषयकत्वादेवेत्यर्थः । तेषां बहूनां सत्वादाह—*कीर्त्तीति* । *नामेति* । उभयविषयकत्वमित्यर्थः । अन्यसम्मतिमप्याह *पातञ्जलेति* । *एतेन* । (२)पातञ्जलादिविरोधेन ।*ज्ञानम्* । प्रत्यक्षादि । ज्ञानवाचकशब्दविषयकत्वेनैव हि तत्वं सुवचम्, नान्यथेति तद्भावः । तदेव वाचेतिनेत्याह । नन्वेवं कथं तद्व्यवहारोऽत आह *अर्थेति* । *इत्यपीति* । तदुक्त्यन्तरमेवेति भावः । अत एव मूलविरोधरूपमपि ।

---

(१) 'शेषः । अत एव प्रमाणनदर्शनसङ्गतिः । तत्र तत्र तद्धेतुत्वस्वीकारश्च । इति ख०पु०पाठः ।

(२) 'एतेनेति' पातञ्जलादिसंमत्या शब्दानुविद्धत्वस्य उक्तायफत्वेनेत्यर्थः । अन्यथा तद्विरोध स्पष्ट एवेति भावः' । इति० ख० पु० पाठ ।

चारिव्यवसायात्मकं प्रत्यक्षम्" इति प्रत्यक्षलक्षणे ऽव्यपदेश्यत्वविशेषणं वदता गौतमेन शाब्दज्ञाने शब्दभानाङ्गीकाराच्च। 'अव्यपदिश्यमानत्वं च व्यपदेशाविषयकत्वम्। व्यपदेशश्चार्थवाचकः शब्द' इति तद्भाष्ये स्पष्टम्।

एवं चान्यत्र तद्भानाग्रहो मुधेति पातञ्जलानामाशयः। 'शब्दविषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः'

(कुञ्जिकाटीका)

व्यपदेशः शब्दप्रयोगः। सच विशिष्टज्ञानादेवेति व्यपदेशानर्हत्वान्निर्विकल्पकलाभः। *व्यवसायात्मकमिति*। विशिष्टज्ञानात्मकमित्यर्थः। शाब्दप्रमाया अप्येकपदार्थे ऽपरपदार्थसंसर्गरूपयोग्यताजन्यत्वेनातिव्याप्तिवारणाय *इन्द्रियेति*। त्वङ्मनोयोगजन्यानुमितावतिव्याप्तिवारणाय *अर्थेति*। सर्वांशे कामिनीत्याद्यलौकिकप्रत्यक्षे इन्द्रियार्थजन्यत्वाभावादव्याप्तिवारणाय *संनिकर्षेति*। चक्षुःकपालसंयोगजन्ये चक्षुर्घटसंयोगेऽतिव्याप्तिवारणाय *ज्ञानमिति*। न चैवमप्यात्ममनोयोगजन्यात्मानुमितावतिव्याप्तिरिति वाच्यम्। ज्ञानपदमहिम्ना विषयतासम्बन्धावच्छिन्नेन्द्रियार्थसंनिकर्षजन्यत्वलाभात्।

अथ 'गुडं भुङ्क्ते' इत्यत्र गुडत्वस्येव मधुरत्वस्यापि प्रकारतया तत्प्रकारकशाब्दबोधवारणाय (१)तद्धर्मप्रकारकशाब्दबोधं प्रति तद्धर्मप्रकारकशक्तिज्ञानस्य हेतुत्वं वाच्यम्। एवं च घटत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशशक्तिज्ञानस्य हेतुतया कथं घटशब्दत्वादेः प्रकारतावच्छेदकतया भानम्, घटशब्दस्य घटशब्दवाच्ये शक्तिरिति शक्तिग्रहाभावात्। यत्तु सम्बन्धिज्ञानविधया शब्दस्य भानमिति। तन्न। हस्तिपकशब्दाद्धस्तिनोऽपि बोधापत्तेरिति चेद् शब्दांशे स्मरणात्मकबोधस्यैवोपगमात्।

*अन्यत्र* शाब्दबोधे। *तद्भानेति*। शब्दाभानस्याग्रहो व्यर्थ

(कलाटीका)

दोषान्तरमाह *इन्द्रियार्थेति*। ननु कथं ततस्तदङ्गीकारो ऽत आह *अव्यपेति*।*एवंच*। तथा तदुक्तौ च।*अन्यत्र*। शाब्दे। *तदेति*। तस्य शब्दाभानस्याऽऽग्रहोऽभिनिवेश इत्यर्थः। तद्भाष्यादिसङ्गतमपीदमित्याह *शब्देति*। तत्पदकृत्यव्याख्यावसरे इति भावः। तदाश-

(१) 'तद्धर्म' इत्यादि 'च' इत्यन्तः पाठः ग० पु० नास्ति।

इति वदता वात्स्यायनेन, 'शब्दजबोधस्य शब्दविषयक-त्वमेव शाब्दत्वं नतु शब्दजन्यत्वम्' इति तत्रैव वा-चस्पतिमिश्रैरुक्तम् ।

"स्वंरूपम्" ( अष्टा०सू०१-१-६८ ) इतिसूत्रे भाष्ये स्पष्टमेतत् ।

तत्र हि 'न वा एतद्वक्तव्यम् । किं कारणम् ? शब्दपूर्वको

( कुञ्जिकाटीका )

इत्यर्थः । *वात्स्यायनेन* । न्यायभाष्यकृता ।

तत्र हि–'रूपम्' इति जानातीत्याकारकं प्रत्यक्षं भवति । रूपादिश ब्दाश्च विषयनामानि । तथा च नामधेयशब्देन व्यपदिश्यमानत्वात्प्र-त्यक्षस्य शाब्दत्वापत्तिरित्याशङ्कायाम् 'अव्यपदेश्यम्' इति सूत्रां-शो ऽवतारितः ।

तस्यायं भावः । रूपादिप्रत्यक्षकाले नामधेयशब्दस्य न कोऽपि व्या-पारः, किं तु व्यवहारकाले रूपमिति जानातीत्यादिः । तस्मादशाब्दं प्रत्यक्षमित्युक्तप्रायम् । अत एव ज्ञानजन्यत्वे सति शब्दज्ञानाजन्यत्वमनु-मितिलक्षणमभिधाय मननजन्यतत्त्वज्ञाने नातिव्याप्तिः, 'तत्त्वमसि' इत्या-दिशब्दविषयकत्वादिति तार्किका अपि वदन्ति । *न तु शब्दजन्यत्व-मिति* । विषयविधया शब्दप्रत्यक्षेऽतिव्याप्तिः ।

यत्तु यत्र विभिन्नविषयकानुमितिसामग्रीकाले शाब्देच्छाबलाच्छा-ब्दबोधः, तत्र शब्दविषयकत्वासम्भवः । न । 'शब्दशाब्दं जायताम्' इत्याकारकेच्छाया एवोत्तेजकतया तदिच्छाविरहविशिष्टानुमितिसा-मग्र्याः प्रतिबन्धकत्वात् तत्र शाब्दबोधाभावात् । तदिच्छाया अप्युत्ते-जकत्वे तु तत्तदिच्छाभावकूटानां विशेष्यविशेषणभावे विनिगमनावि-रहाद्गौरवमित्यर्थ इति । तन्न । शाब्दबोधमात्रस्यैव शब्दविषयकतयै-कविधेच्छाया एवोत्तेजकत्वात् ।

*न वा एतदिति* । "स्वंरूपम्" इति सूत्रे न वक्तव्यमित्यर्थः । *शब्दपूर्वको हीति* । शब्दज्ञानपूर्वको हीत्यर्थः । उपलब्ध-स्यैव हि शब्दस्यार्थबोधकत्वं न तु चक्षुरादिवत्सत्तामात्रेण बोधक-त्वमिति भावः ।

अयमाशयः । अतरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वरूपमेव मु-ख्यमर्थः । शब्दार्थयोश्चाभेदाच्छब्दगतैव जातिरर्थे आरोप्यते । अत

कारात् ।

'येनोच्चारितेन सास्नाखुरककुद्विषाणिनां सम्प्रत्ययो भवति स शब्द' इति भाष्याशयस्तु-यथा चिज्जडयोस्तादात्म्यावभासेऽपि चित एव भासकत्वं जडस्यावभास्यत्वमेव स्वभावात्, तथा स्वभावादेव शुद्धशब्दस्य भासकत्वमर्थस्यावभास्यतेति वदन्ति । तस्माद् बुद्ध्यवच्छिन्नाकाशधर्मोऽयमान्तरः स्फोटः ।

अर्थश्च बौद्ध एव ज्ञानविषयः शक्तिग्रहविषयश्च ।

(कुञ्जिकाटीका)

इत्यत आह *भाष्याशयस्त्विति*(१) । *चिज्जडयोरिति* । तयोस्तादात्म्याध्यासस्तु विवेकाख्यातिमूलः । यद्वशात्पुरुषस्यापि कर्तृत्वभोक्तृत्वव्यवहारः । *जडस्यावभास्यत्वमिति* ।

नन्वेवं वृत्तिव्याप्यत्वं जडत्वमिति फलितम्, तथा च ब्रह्मणोऽपि वेदान्तवाक्यजन्यज्ञाने विषयत्वाद्व्यभिचारः । सत्यम् । वृत्त्युपहितमेव ब्रह्म वृत्तिविषयः । तच्च मिथ्यैव । शुद्धं तु स्वप्रकाशमेव । नच शुद्धस्यापि 'स्वप्रकाशम्' इत्यादिज्ञानविषयताऽस्त्येवेति वाच्यम् । तद्वाक्यस्य लक्षणया अशुद्धत्वमप्रकाशत्वव्यापकमित्यर्थात् । *पर्यवस्येति* । स्फोटाख्यशब्दस्याप्याकाशदेशताया न्याय्यत्वादाह *बुद्ध्यवच्छिन्नेनि* । आभ्यन्तरेत्यर्थः । वेदान्तरीत्या अन्तःकरणविशेषस्य बुद्धेर्घटादिवद् द्रव्यतया आकाशावच्छेदकत्वं बोध्यम् ।

(कलाटीका)

वत्वादिति भावः । वैपरीत्यशङ्कानिरासायाह *येनोच्चारीति*(२) । शारीरमारुताभिहतकण्ठादिस्थानैस्तदवयवद्वाराऽभिव्यक्तेन येनेत्यर्थः । अत्र विषयाणां तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते । *सम्प्रत्ययः* । ज्ञानम् । (३)परमप्रकृतमुपसंहरति *तस्मादिति* ।

---

(१) चिज्जडादीति पाठः नास्ति ख०पुस्तके ।

(२) 'ननु एवमपि तयोस्तादात्म्येन वैपरीत्यशङ्काया अपि सम्भवेन सिद्धान्तभाष्यासङ्गतिरेवोभयथापीत्यत आह—*येनोच्चारीति* ।' अय ख० पु० पाठः ।

(३) 'नेतीति पाठः । योगसूत्रमपि बौद्धार्थाङ्गीकारे मानमित्याह *तस्मादिति* । बोधार्थाङ्गीकारादित्यर्थः । उपपन्न इत्यत्रान्वयः । क्रमेण परमप्रकृताद्यनुवादेनाह *बुद्धावेति* । *तेषां* शब्दार्थज्ञानाम् योगसूत्रमाह—*शब्दार्थेति'* । अयं ख० पु० पाठ· ।

**ज्ञानं च वृत्तिरूपं बुद्धिधर्म एवेति एकदेशस्थत्वात्तेषामितरेतराध्यासः "शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" इति योगसूत्रोक्त उपपन्नः । स चानादिवासनावशादनादिरेव । एवं शब्दार्थधर्मयोः, इति न कुतर्कावसरः ।**

---

( कुञ्जिकाटीका )

*वृत्तिरूपमिति* । अन्तःकरणमिन्द्रियद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमते सा वृत्तिरित्युच्यते । *बुद्धिधर्म इति* । अन्तःकरणमेव नैर्मल्यान्निश्चये जाते बुद्ध्याख्यां लभत । ब्रह्मात्मकज्ञानस्य बुद्धिधर्मत्वाभावादुक्तं वृत्तिरूपेति । *तेषाम्* । शब्दार्थवृत्तीनाम् । *शब्दार्थप्रत्ययानामिति* । एतच्च पातञ्जलसूत्रम् । गौरिति शब्दः, गौरित्यर्थः, गौरिति प्रत्ययः, इत्येवं शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करः प्रसिद्धः । तेषां शास्त्रयुक्तिभ्यां विभागः सिद्धः । वर्णव्यङ्ग्यं पदं, पदव्यङ्ग्यं वाक्यमिति शब्दतत्त्वम्, अर्थो द्रव्यादिर्वाच्यो लक्ष्यश्चेत्यर्थतत्त्वम्, शब्दजन्याऽर्थविषया बुद्धिः प्रत्यय इति ज्ञानतत्त्वम् । तस्मिन् विभागे संयमात् सर्वशब्दादिवशीकारसूचकं सर्वभूतानां पश्वादीनां रुतस्य शब्दस्य ज्ञानं भवति 'अनेनाभिप्रायेणानेनेदमुच्चरितम्' इति । *उपपन्नइति* । तेषामितरेतराध्यास इति पूर्वेणान्वयः । ननु 'शुक्लः पटः पटः शुक्ल' इति प्रमाया अप्यध्यासरूपत्वाद् भ्रमत्वाद् भ्रमत्वापत्तिः । सत्यं, स्वरूपविवेकतिरस्कारेणाभेदधीरेवाध्यासः । *सच* । अध्यासश्च । *शब्दार्थेति* । श(१)ब्देऽर्थधर्मस्याप्यध्यासः ।

( कलाटीका )

*योगसूत्रोक्त इति* । संयमान्तरस्य सिद्ध्यन्तरमिदमुक्तं तत्र । *शब्देत्यादि* । गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानं तेषां सङ्केतरूपाध्यासात्तत्रैवोक्तात्सङ्करो विवेकाग्रहणम् । वस्तुतस्तेषां भेद एव । अतस्तेषां प्रविभागे भेदे संयमात्साक्षात्कारपर्यन्तात्सर्वभूतानां रुतानि ज्ञायन्ते, अयं काकादिरमुमर्थमनेन शब्देन कथयतीत्यर्थः । अन्यथा श्रोत्रग्राह्यैर्वर्णैर्बाह्यघटाद्यर्थानामत्यन्तभेदात्कथमध्यासः स्यात् । किमर्थं वा तज्ज्ञानाय योगोपदेशः स्यादिति भावः । नच तद्रीत्या सङ्करे कथं तेषां प्रविभागः । सङ्करस्यैकदेशस्थत्वोपाधिकत्वात् ।

---

( १ ) शब्देन इति ख० पुस्तके पाठः ।

अत एव ।

'निकारो ऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम्' ।

'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।

गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः ॥'

'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादि सङ्गच्छते ।

अन्त्ये हिरण्यकशिपुनामानमिति प्रतीतेरनुभवसिद्धत्वा-त् । अत एव 'कथितपदत्वं दोषो ऽपि क्वचिन्न दोषः ।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।

संपत्तौ च विपत्तौ च महतामेकरूपता ॥

( कुञ्जिकाटीका )

*कुतर्केति* । अग्निशब्दोच्चारणे मुखे दाहापत्तिरित्यादीत्यर्थः ।

*निकार इति* । निकारो ऽधिक्षेपो निशब्दश्च । निशब्दोत्तरधन-शब्दनिधनशब्दार्थयोरभेदाध्यवसायः । कथितपदत्वं न दोष इत्येतदु-दाहरति *उदेतीति* । कथितपदत्वमेकस्यैव पदस्य पुनः प्रयोगः ।

( कलाटीका )

वस्तुतस्तत्रापि तेषां भेद एवास्तीति न दोषः ।

एतेनास्मदादीनां तद्भेदसाक्षात्कारे ऽपि योगजतत्साक्षात्काराभा-वान्न सर्वभूतरुतज्ञानमित्यपास्तम् , तत्सूत्रतद्भाष्यविरोधात् । एतत्स-ङ्करमूलक एव चायमयमित्यपि सङ्केतः । कार्यकारणभावोऽपि तद-र्थविषयकशाब्दं प्रति तदर्थगृहीतशक्तिकतत्तद्रूपाभिव्यक्तस्फोटज्ञान-त्वेन हेतुत्वमिति बोध्यम्(१) ।

*अत एव* । शब्दार्थयोस्तादात्म्यादेव । निशब्दोऽग्रे पश्चाद्धनं पश्चाद्धनशब्द इति यत्तदेव; अहह खेदे, निधनं भोरित्यर्थः । एवं रामेति यद् द्व्यक्षरं नाम तदेव पिनाकिनो मानभङ्ग इत्याद्यर्थः । हिरण्यक-शिपुशब्दमित्यर्थभ्रमाबाह—*अन्त्येति* । *प्रतीतेरिति* । सा चाभेदं विनाऽनुपपन्नेति भावः । *अतएव* । शब्दार्थयोरभेदेन शब्दस्य प्रकारतया शाब्दबोधविषयत्वादेव । प्रकाशेत्यत्रान्वयः । *दोषोऽपीति* ।

तापेन राजते सूर्यः शूरश्चापेन राजते ।

(१) 'न्यूनतां परिहरति *एवमिति* *शब्दार्थेति* । तयोर्यौ धर्मौ तयोरित्यर्थः । कुतर्क उक्त एवानुपदम् । इति ख० ग० पु० पाठः ।

इत्यत्र ताम्रपदं विना न तादृशो बोधः, पदप्रकार-कबोधात्' इति प्रकाशकृतः ।

तदुक्तं हरिणा—

यदन्तःशब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।

तदाहुरपरे शब्दं तस्य वाक्ये तथैकता ॥

अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते । इति ।

एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ । इति च ।

अन्तस्तथा स्थितावपि बहिर्भेदेन भासेते । तस्यैव शक्तिभेदात् । अक्रमे ऽपि तस्मिन् क्रमभासोऽपि तच्छ-

( कुञ्जिकाटीका )

*ताम्रपदं विनेति* । अत्र यदि रक्त एवास्तमेतीति क्रियते तदा पदान्तरप्रतिपादितः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीत । पूर्वं बाह्यस्फोटं वाचकमाश्रित्य व्याख्यातम्, इदानीमान्तरमेवाह *यदन्तरिति* । यदेकं निरवयवमन्तः शब्दतत्त्वं नादैर्बहिः प्रकाशितं तद् वाक्यमपरे आहुः, तस्य वाक्यस्य एकता निरंशतैव प्रतिपाद्यते । न केवलं वाक्यमेवाखण्डं किन्तु वाक्यार्थो ऽपीत्याह *अर्थभागैरिति* । तेषां मते पदार्थभागैरखण्डो वाक्यार्थ आन्तरो व्यज्यते । तौ च शब्दार्थौ एकस्य तत्त्वस्य सम्बन्धिनौ अभिन्नावेव बहिःस्थितौ भिन्नाविव प्रतिभासेते । *तथा* । अभेदेन । *तस्यैव* । आत्मन एव । शक्तेर्भेदो वैचित्र्यम् । *अक्रमे* । वर्णादिक्रमशून्ये । *वेदशब्देभ्य

( कलाटीका )

इत्यादाविति भावः । अदोषस्थलमाह—*उदेतीति* । *तादृशः* एकरूपताबोधः । अत्र हरिसंमतिमप्याह *तदुक्तमिति* । बुद्धिस्थयोरुभयोर्मिथो भिन्नयोरेव ज्ञानविषयत्वमित्युक्तमित्यर्थः । *हरिणा* । तेनापि । *नादैः* । वर्णैः । *अपरे* । वैयाकरणाः । *शब्दं* वाचकम् । *तस्य* आन्तरस्य । *वाक्ये* । बाह्ये । *अर्थभागैः* तद्रूपतदंशैः । एकता चेत्याहुः । *तथा* । तथासति । *तेषाम्* । अपरेषाम । *आत्मनः* । अन्तःकरणस्य । बुद्धिस्थत्वेनाह *अपृथगिति* । नन्वेवं बाह्यप्रतीतिविरोधोऽत आह *अन्तरिति* । *तथा* । अभेदेन । *तस्यैव* आत्मन एव । *तस्मिन्* । आन्तरावभासे(१) । *सः* ।

(१) 'भासेतिपक्षे बाधकमप्याह—किञ्चेति । इति ख० पु० पाठः ।

त्किपशाद्वेत्यपि स्पष्टं तत्रैव।

किञ्च बौद्धपदार्थानङ्गीकारे—

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥

इतिस्मृतेः, "सभूरिति व्याहरत् स भूमिमसृजत" इतिश्रुतेश्च सृष्टेः प्राग् भूःशब्दादिभ्यस्तदर्थज्ञानपूर्वकं सृष्टिरिति लाभेन तदा बाह्याया भुवोऽभावाद् भूःशब्दस्य शक्तिग्रहपूर्वकं कस्यार्थस्य बाधः स्यात्। नच जा-

( कुञ्जिकाटीका )

इति*। वैदिकशब्दान् स्मृत्वेत्यर्थः। *पृथक्संस्थाः*। भिन्नाकृतीन् पृथिव्यादीन्। स्पष्टश्चेदम् "एते असृग्रमिन्दवः" इतिश्रुतावपि। *तदर्थज्ञानेति*। तत्तच्छब्दः तंतं पदार्थं स्मृत्वा रचितवान्। बौद्धपदार्थाभावे तु तदानीं कस्य पदार्थस्य स्मरणं स्यादित्यर्थः। *अवच्छेदका-

( कलाटीका )

हिरण्यगर्भः। *वेदशब्देभ्यः* वैदिकशब्देभ्य एव। *आदौ* सृष्टिप्रारम्भे। *पृथक्पृथक्*। भिन्नभिन्नरूपतया। सर्वेषां नामानि कर्माणि च सर्वेषां संस्थाः व्यवस्थाश्च पृथक् निर्ममे इत्यर्थः। ज्ञानपूर्वमिति शेषः। अत एव श्रुतिमाह-*सभूरात*। आदिपदार्थमाह-*सृष्टिरिति*। वेदेत्याद्यर्थमाह-*भूरिति*। श्रुतिलब्धमाह-*तदर्थेति*। अन्यथा वैपरीत्यस्याप्यापत्तिरिति भावः। *इति* इत्यस्य। *तदा* सृष्टेः प्राक्। *स्यादिति*।

(१) किञ्च, तथा सति तत्र शक्तिग्रहस्य पुरुषसङ्केतसापेक्षत्वापत्त्या

---

( १ ) ननु देवताना विग्रहवत्वे जन्ममरणत्वेन अनित्यस्य तस्यार्थस्य नित्येनेन्द्रादिशब्देन सम्बन्धस्यानित्यतापत्तौ वैदिकशब्दाना पुरुषसङ्केतसापेक्षत्वापत्या तत्र च दोषजन्यत्वसम्भावनया वेदप्रामाण्यभङ्गरूपः शब्दे विरोध इत्याशङ्कासमाधानपरं—"शब्देति चेन्नात प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति व्याससूत्रम्। देवताया विग्रहवत्वेऽनित्यतापत्त्यानित्यस्यार्थस्येन्द्रेदादिशब्देनानित्यसम्बन्धः स्यात्। तथाच वैदिकशब्दैः प्रामाण्यभङ्गरूपविरोध इति चेन्न, यतो भूरादिपदार्थानामपि सभूरितिप्रत्यक्षश्रुत्या सर्वेषामित्यनुमानरूपस्मृत्याचातो वैदिकशब्दादेव ज्ञानपूर्वकं प्रभवादुत्पत्तेः सत्वात्तत्रापि शक्तिग्रहस्य पुरुषसङ्केतसापेक्षत्वेन दोषः सम इति प्रतिबन्दीरूपः शाब्दस्तदर्थः। अथ तत्र बौद्धसूक्ष्मरूपभूरादे सत्कार्यवादिभिः स्वीकारात्तत्रैव शक्तिग्रह इति न दोषः, तर्हि प्रकृतेऽप्यदोष सम इति तत्तात्पर्यार्थः। तत्र कैश्चिदन्यथा तात्पर्यार्थो वर्णितः। हिरण्यगर्भस्य भूरादिपदशक्तिग्रहानुपपत्त्याजातेर्नित्यत्वस्वीकारात्तत्र शक्तिग्रहवत् प्रकृतेऽपि। तथेति तत्खण्डयति नचेति। इति ख० ग० पु० कलास्थापितपाठसदृशः पाठः।

तेर्नित्यत्वात्तत्र शक्तिग्रह इति वाच्यम् । अद्वैतिनां जातेरप्यनित्यत्वेन तस्या अपि केनचिद्वैदिकशब्देनैव ज्ञानपूर्वं ब्रह्मणा निर्माणे तत्राप्यस्या एव दुरवस्थायाः सत्त्वात् । निराश्रयजातिसत्त्वे मानाभावाच्च(१)तत्तद्व्यक्तिसमवेतब्रह्मसत्ताया जातित्वे ऽप्यवच्छेदकाभावात्तस्यास्तदा जातित्वाभावात् । किञ्च(२) तत्तद्व्यक्त्यवच्छिन्ना ब्रह्मसत्ता जातिरिति गौरवान्न युक्तमित्यग्रे वक्ष्यते । "अपागादग्नेरग्नित्वम्" इति श्रुत्या तन्नाशस्यैव कथनाच्च । त-

( कुञ्जिकाटीका )

भावात्* । उपधायकाभावात् । *तस्याः* । ब्रह्मसत्तायाः । *तदानीम्* ।

( कलाटीका )

तत्र च दोषजन्यत्वसम्भावनया वेदप्रामाण्यभङ्गरूपः शब्दे विरोधः स्यादित्यपि बोध्यम् ।

यत्तु हिरण्यगर्भस्य भूरादिपदशक्तिग्रहानुपपत्त्या जातेर्नित्यत्वात्तत्र शक्तिग्रह इति "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इतिव्याससूत्रव्याख्यावसरे उक्तं देवताया विग्रहवत्त्वे ऽनित्यताऽऽपस्याऽनित्यस्याऽर्थस्येन्द्रादिशब्देनानित्यः सम्बन्धः स्यात् । तथाच शब्दे वैदिकशब्दे प्रामाण्यभङ्गरूपो विरोध इति चेन्न । अतः शब्दात् श्रौतशब्दादेव ज्ञानपूर्वकं हिरण्यगर्भादेः श्रुतिस्मृत्योः सर्वोत्पत्तिश्रवणेनोक्तभूरादिशब्दानां सम्बन्धानित्यत्वप्रयुक्तमप्रामाण्यं यथा परिहर्त्तव्यमेवं देवताविषयेऽपीति तदर्थ इति ।

तत्खण्डयति *नचेति* । स्पष्टं तत्सूत्रव्याख्यायां गुरुचरणकृतायाम् । *निर्माणे* । स्वीक्रियमाणे । *निराश्रयेति* । प्रलये इत्यादिः । संस्थानव्यङ्ग्यत्वाज्जातेः । इदञ्चाविद्या वा आविद्यकधर्मविशेषो वा जातिरितिपक्षयोरुक्तम । तृतीयपक्षे आह *तत्तदिति* । *तदा* । सृष्टेः प्राक् । इदं च तस्यास्तत्त्वमभ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह—*किञ्चेति* । *अग्र इति* । अत्रैव प्रकरणे जातिस्फोटनिष्कर्षोत्तरं परे त्वितिमतेनेतिभावः । विशिष्टवेषायास्तस्या अपि अनित्यत्वमाह *अपागादिति* । "वाचारम्भणम्" इति श्रुतिवाक्यशेषोऽयम् । अग्निस्तु ब्रह्मैवेत्यर्थादुक्तम । किञ्चेत्याद्युक्तव्याससूत्रतात्पर्यार्थानुरोधेनोपसंह-

( १ ) 'तत्तद्व्यक्त्यवच्छिन्नब्रह्म' इति क० पु० पाठः ।
( २ ) किञ्च-नाद्य पाठो ऽयं कु० कख पु० मूले नोपलभ्यते ।

स्मात्सर्वज्ञत्वाद्भगवदनुग्रहाच्च वेदलाभवत्तदैव स्वबुद्धिवर्त्तिपदार्थस्य स्थूलरूपेण भानम्, तत्र संबन्धग्रहो बोधश्च हिरण्यगर्भस्येति बोध्यम्।

स चायं स्फोट आन्तरप्रणवरूप एव। "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः, बह्वी वाक्यपदादिरूपा, नानारूपा घटपदादिरूपा च। "अकार एव" इति श्रुत्यन्तरे

(कुञ्जिकाटीका)

व्यक्त्यभावदशायाम्। *वेदलाभवदिति*। "यो वै ब्रह्माणं विदधाति पूर्वं यस्मै वेदान्प्रहिणोति सर्वान्" इति। स्वमानेन वर्षशतान्ते ब्रह्मणोऽपि नाशादन्य एव हिरण्यगर्भ उत्पद्यते।

*प्रणवरूप इति*। प्रणवश्च द्विविधः परोऽपरश्च। परो ब्रह्मात्मकः, अपरः शब्दात्मकः।

तदुक्तं सूतसंहितायाम्—

परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम्।
प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः॥ इति।

सत्यज्ञानानन्दादिरूपं ब्रह्म यतः प्रकर्षेण नवं निःशेषविकाराराहित्येन कूटस्थं, तथा प्रकर्षेण नवः तत्प्राप्तिरूपो यस्मादिति व्युत्पत्त्या शब्दोऽपि प्रणव इति तदर्थः। *स्पर्शोष्मभिरिति*। स्पर्शः ताल्वादेः।

(कलाटीका)

रति *तस्मादिति*। अन्यथा निर्वाहाभावादित्यर्थः।

तत्र स्फोटस्वरूपमाह *सचेति*। प्रणवस्यापि द्वैविध्यादाह—*आन्तरेति*। स्पर्शोष्मभिरित्युपलक्षणमन्येषामपि। पौनरुक्त्यभ्रमं निरस्यन् रूपपदार्थमाह—*घटेति*। घटपटादिरूपा चेति पाठः। श्रुत्यन्तराविरोधमाह *अकार एवेति*।

तदुक्तं "विशोका वा ज्योतिष्मती" इति पातञ्जलसूत्रभाष्यव्याख्याने प्रक्रियात्वेन वाचस्पतिमिश्रादिभिः—'उदरोरसोर्मध्ये ऽधो मुखमष्टदलं पद्मं तद्रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तत्रालम्बने चित्तं धारयेत्। तन्मध्ये हि सूर्यमण्डलमकारो जागरितस्थानं, तदूर्ध्वे चन्द्रम-

पाठः । तत्राप्यवयवद्वारा प्रणवोपलक्षणत्वम् । द्वादशस्कन्धे भागवते प्रणवस्य स्फोटत्वं स्फुटमेवोक्तम् ।

तत्र हि—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥

हृद्गताकाशादित्यर्थः । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्माभिरपि विभाव्यते=श्रूयते ।

ततोऽभूत्त्रिवृदोङ्कारो यो ऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥

---

( कुञ्चिकाटीका )

ऊष्मा वायुः । *समाहितात्मन इति* । ब्रह्मणो हृदि य आकाशस्तस्मान्नादो ऽभूदित्यर्थः । स नादः क इत्याह *य इति* । अव्यक्तप्रभवत्वेन सूक्ष्मत्वं दर्शितम् । अत एवाह *स्वराडिति* । स्वत एव हृदि

( कलाटीका )

ण्डलमुकारः स्वप्नस्थानं, तदूर्ध्वं वह्निमण्डलमकारः सुषुप्तस्थानं, तदूर्ध्वं ब्रह्म व्योमात्मकं नादस्तुरीयं स्थानं यामर्धमात्रेति योगिनाम्, तत्कर्णिकायां विष्वग्व्यापिशाखासहस्रवत्या मनोवहनाड्या मूलं तिष्ठति, यस्या ऊर्ध्वमुखी एका शाखा सुषुम्नाख्याऽऽन्तरसूर्यादिमध्यगा वा तया च शाखारूपया ब्रह्मनाड्याबाह्यान्यपि सूर्यादिमण्डलानि प्रोतानि, सैव मनोवहा नाडी चित्तस्थानं, तस्यां ध्यानधारणासमाधिभिश्चित्तसाक्षात्कारो भवति' इति ।

सोऽयं प्राणिमात्रस्य हृत्स्थः प्रणवस्तत्तुरीयोंऽशोऽर्धमात्रारूपो नादो वा स्फोट इत्युच्यते ।

इदमेव मार्कण्डेयेनोक्तम्—

अर्धमात्रास्थिता नित्या याऽनुच्चार्या ऽविशेषतः । इति ।

अविशेषतः, गत्वाद्यनालिङ्गिततया । तस्यैव प्रणवस्य श्रुत्या सर्ववाग्रूपत्वमुक्तमिति बोध्यम् । स्पष्टार्थमाह *द्वादशेति* । *तत्र* । हीत्यस्येत्यर्थकमुक्तमित्यत्रान्वयः । *समाहितेति* । नियतान्तःकरणस्येत्यर्थः । हृद्याकाशादित्यस्यार्थमाह *हृद्गतेति* । तुरीयपादार्थमाह *कर्णेति* । *ततः* । नादात् *अत एवेति* । अनेन यतोऽव्यक्त प्रभवस्तद्भगवतो लिङ्गमित्यन्वयः सूचितः ।

त्रिवृत्, त्रिमात्रः। अव्यक्त ईश्वरः प्रभवो यस्य सः। अत एवाह भगवतो लिङ्गं=गमकः।

कोऽसौ परमात्मा तत्राह—

शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक्।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥

सुप्ते श्रोत्रे=कर्णपिधानादिना अवृत्तिके। इमं=प्रणवरूपम्। स्फोटं=स्थूलरूपेण परिणतमपि यः शृणोति स परमात्मा। जीवस्य तु करणाधीनज्ञानत्वात् करणस्य चावृत्तिकत्वान्न तदा श्रोतृत्वम्। ईश्वरस्तु यतः शून्ये ऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य तादृश इति श्रोतैव। जीवस्य तदुपलब्धिस्तु ईश्वरद्वारिकैव। यथा निद्रा-

( कुञ्चिकाटीका )

प्रकाशमान इत्यर्थः। *त्रिमात्र इति*। अकारोकारमकाररूपमात्रात्रयात्मक इत्यर्थः। ईश्वरः प्रभवो यस्येति। ननु "य इच्छन्दसामृषभ" इति श्रुतौ ॐकारं प्रकृत्य "ब्रह्मणः कोशो ऽसि" इत्युक्तं तत्कथं ब्रह्मप्रभवत्वम्। सत्यम्। असेरिवोपलब्ध्यधिष्ठानत्वात्कोशत्वम्। *गमक इति*। कार्येण लक्ष्यत इति भावः।

ननु जीव एव श्रोताऽस्त्वित्यत आह *सुप्ते इति*। पिहितेऽपि श्रोत्र इत्यर्थः। *प्रणवरूपमिति*। अव्यक्तमित्यर्थः। *श्रोतैवेति*। इन्द्रियवर्गाभावेऽपि ज्ञातृत्वात्परमात्मैव श्रोतेत्यर्थः। *निद्रेति*।

( कलाटीका )

कोऽसौ इत्यस्य नन्वित्यादिः। वस्तुतः स्वभावादाह *कर्णेति*। तया परिणतस्य सर्वधारण्यादाह *स्थूलेति*। ननु स जीव एव भवतु अत आह *जीवस्यत्विति*। *करणेति* बहुव्रीहिः। *अवृत्तिकेति*। उक्तरीत्येति भावः। *तदा*। तत्पिधानादिकाले। नन्वेवमुक्तयुक्त्या ईश्वरस्यापि कथं श्रोतृत्वमत आह—*ईश्वरस्त्विति* हेतुगर्भमिदं विशेषणमित्याह *यत इति*। *शून्ये ऽपि* तेनावृत्तिकेऽपि। तस्य भावप्रत्ययान्तत्वादाह *ज्ञानमिति*। ननु तदा जीवस्या(१)ज्ञायमानोपलब्धिः कथमत आह *जीवस्येति*। इदमावश्यकमित्याह *यथेति*। स्पष्टं चेदं वेदान्तसूत्रव्याख्यायां गुरुचरणकृता-

(१) 'स्यापि जायमानोपलब्धिः' इति ख० पु० पाठः।

काले लीनेन्द्रियमपि जीवं परमात्मैव शब्दं श्रुत्वा प्रबोधयति तद्वत् । येन प्रणवेन वाग् बृहती व्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिः ।

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥

स्वधाम्नः=स्वकारणस्य । किञ्च, स तदंशभूतसमस्तदेवतावाचको ऽपीत्याह सः=प्रणवः । सर्वमन्त्राणामुपनिषद्रहस्यं सूक्ष्मरूपम्, यतो वेदकारणम् । तत्कारणत्वेऽपि न विकारित्वं, यतः सनातनं=सदैकरूपम् ।

तस्य ह्यासँस्त्रयो वर्णा अकाराद्या भृगूद्वह ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ।

अकाराद्या अकारोकारमकाराः । तस्येत्यवयवा-

(कुञ्जिकाटीका)

प्रधानांशतमस्समुद्रेके सति जीवस्तमसा मग्नो भवति तदालम्बना जीवस्य वृत्तिर्निद्रा । उद्रेको दृढतरसंस्कारजनकत्वम् । जीवस्य श्रोतृत्वासम्भवं दर्शयति *लीनेन्द्रियमपीति* । *तत्कारणत्वेऽपीति* । वेदानां कारणीभूतोऽपि प्रणवो नित्य एवेत्यर्थः । त्रीन् भावान्प्रत्येकं दर्शयति *गुणेति* । *अकारोकारेति*। ननु समाहारद्वन्द्वे ऽव्ययत्वापत्तिः, "अवतेष्टिलोपश्च" इति औणादिकस्य रूढस्यैव स्वरादिपाठे-

(कलाटीका)

याम् । उत्तरार्धार्थमाह *येनेति*। पूर्वार्धस्थस्य चात्र संबन्धेनाह *यस्य चेति* । पूर्वोक्तत्वादाह *हृदयेति* । *स इति* । मध्यमणिन्यायेनान्वेति । साक्षादित्यनेनान्येषामपि परम्परया स एवार्थ इति सूचयति । उत्तरार्धेनान्यदुच्यते इत्याह *किञ्चेति* । *तदिति* । परमात्मेत्यर्थः । मन्त्राणां तत्तद्देवताप्रतिपादकत्वादिति भावः । *रहस्यम्* । उपनिषदिति तदर्थः । *सूक्ष्ममिति* । तत्र हेतुगर्भं विशेषणमाह *यत इति* । एवमग्रेऽपि । *वेदेति* । वेदस्य कारणमित्यर्थः । मृदादितुल्यत्वादाह *तत्कारेति* । *तस्य* । प्रणवस्य । लौकिकाकारादिवर्णक्रमनिरासायाह *अकारोकेति*। नेयमन्यजनकभावे षष्ठी। तथा सति हि पञ्चमीमेव वदेद् । अत आह *तस्येत्येवेति* । *भा-

वयविभागे षष्ठी। यैः=अकाराद्यैः। त्रयः, त्रिसंख्यायुक्ताः। भावाः=धर्माः। धार्यन्ते तत्कारणत्वात्। गुणाः=सत्वरजस्तमांसि। नामानि=ऋग्यजुस्सामलक्षणानि। अर्थाः=भूर्भुवःस्वर्लोकाः। वृत्तयः=जाग्रत्स्वप्नसुषुप्तयः। अनेन तस्यैव सर्वप्रपञ्चकारणतोक्ता।

ततोऽक्षरसमाम्नायमसृजद्भगवानजः।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम्॥ इति।

तत, अकारादिभ्यः। अन्तःस्थादयो लक्षणं यस्य तम्।

तेनासौ चतुरो वेदाँश्चतुर्भिर्वदनैर्विभुः।
सव्याहृतिकान्सोंकारान् चातुर्होत्रविवक्षया॥

---

( कुञ्जिकाटीका )

नाव्ययत्वादिति चेन्न। औणादिकस्य "कृन्मेजन्तः" इत्येव सिद्धे स्वरादिपाठस्यैतन्मात्रार्थत्वात्। तत्र ब्रह्मप्रतिपादकत्वं समुदायशक्त्या। तदाहुः—

अकाराद्यास्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः।
अन्ते प्रतीयमानो यो ध्वनिर्ब्रह्मेति कीर्त्यते॥ इति।

*प्रपञ्चकारणतेति*। ननु समुद्रे ऽपि वाय्वाद्यभिघातं विना तरङ्गो नोत्पद्यते तत्कथं चिन्मात्राऽद्वितीये द्वितीयमज्ञानं सम्बध्यते यतोऽहङ्कारायुत्पत्तिरिति चेत्। सत्यम्, कार्यमात्रस्य कारणमविद्या सा चाहङ्कारादिदृष्ट्यैव चिदात्मनि कल्प्यते नतु चिदात्मनि तत्सम्बन्धो ऽस्ति।

*अन्तःस्थोष्मेति*। यरलवा अन्तःस्थाः। शषसहा ऊष्माणः।

( कलाटीका )

वाः*। पदार्थाः। त एवोक्ताः। *गुणेति*। धारणं न घटभूतलादिवदित्याह *तत्कारेति* । त्रित्वं प्रत्येकान्वयि न समुदितान्वयीत्याह *गुणा इत्यादि*। फलितमाह *अनेनेति*। *तस्यैव*। आन्तरप्रणवरूपस्फोटस्यैव। *तत इति* बहुवचनान्तात्तसिलित्याह *अकारादिभ्य इति*। अस्य वेदमूलत्वेन तत्तुल्यत्वादत्र समाम्नायपदप्रयोगः। आदिना प्लुतादिपरिग्रहः। *स्वरः*। उदात्तादिः। अन्यथा पौनरुक्त्यं स्पष्टमेव। *तेन*। अक्षरसमाम्नायेन। प्राधान्यात्तद्वदारम्भकत्वाच्च आह *सव्येति*। बाह्यप्रणवाशयेनाह *सोङ्काराविति*। चतुर्णां

असृजदित्यनुषज्यते । होत्रुपलक्षितांश्चत्वार ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षयेत्यर्थकमुक्तमिति ।

निरुक्तभाष्ये ऽपि उक्तरीत्या पदसत्ताऽभावाशङ्कोत्तरभूतं "व्याप्तिमत्त्वात्तु शब्दस्य" इति प्रतीकमुपादायोक्तम्–'अभिधानाभिधेयरूपा बुद्धिर्हृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणोदीर्यमाणा कण्ठादिषु वर्णभावमापद्य बाह्याकाशस्थं शब्दं स्वरूपं कृत्वा श्रोत्रद्वा-

( कुञ्जिकाटीका )

*विभुः* । चतुर्मुखरूपो भगवान् । *असृजत्* । आविर्भावितवान् । "शिवाद्या ऋषिपर्यन्ताः स्मर्तारो ऽस्य न कारकाः" इति वचनात् । एतेन "छन्दांसि जज्ञिरे तस्माद्" इति वचनेन वेदानां जन्यत्वमित्यपास्तम् । *होत्रुपलक्षितान्* । होत्रा उपलक्षितम् । होताऽध्वर्युर्ब्रह्मा उद्गाता चेति चत्वार ऋत्विजः । तत्र हौत्रमृग्वेदस्य, आध्वर्यवं यजुषः, औद्गात्रं साम्नः ।

*पदसत्ताऽभावेति* । बाह्यपदसत्ता नास्तीत्याशङ्क्येत्यर्थः । बुद्धेरेव विषयाकारेण परिणामादाह *रूपा बुद्धिरिति* । *अभिधानम्* । वाचकम् । *(१)हृदयेति* । हृदयस्थो य आकाशः तत्र स्थितमित्यर्थः । आभ्यन्तरार्थशब्दरूपा बुद्धिर्वक्त्राभिघातेन वाक्यार्थशब्दरूपवर्णात्मिका भूत्वा श्रोत्रद्वारेण परबुद्धिविषया भवतीत्यर्थः । *उदीर्यमाणा* । प्रेर्यमाणा । *स्वस्वरूपमिति* । आन्तरस्यैव बाह्यरूपताऽध्यव-

( कलाटीका )

होतृत्वाभावादाह *होत्रुपेति* । 'छत्रिण' इतिवत्तत्त्वारोप इति तत्त्वम् ।

अयमुक्त एवार्थो निरुक्ततद्भाष्यसंमतोऽपि इत्याह *निरुक्तेति* । *उक्तरीत्येति* । वर्णानामुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वादित्यर्थः । अभावेऽस्यान्वयः । अभावेनाशङ्केति समासः । *तेन* । नामाख्यातादिभेदेन । तद्विभागकथनम् , तल्लक्षणकरणम् , प्रकृतिप्रत्ययविभागेन तदन्वाख्यानं चेति सर्वमनुपपन्नमित्याशङ्केत्यर्थः । *अभिधानेति* । शब्दार्थोभयरूपेत्यर्थः । उदीर्यमाणा सती । *कण्ठादिषु* । स्थानेषु । *बाह्येति* । सर्वसमष्टिर्विराज इत्यर्थः । *श्रोत्रेति* । श्रोतुरित्या-

(१) हृदये-त्यर्थः । कुं० कपु० नास्ति ।

रेण तत्र स्थितां श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थसर्वाभिधानरूपां तत्तद्बुद्धिं व्याप्नोति। पुरुषयत्नजा वक्त्रोद्घाताः परं नश्यन्ति, न शब्दः। स च तदनुरक्तो ऽर्थप्रत्ययं जनयति इति तत्रत्यपदत्वादिकं व(१)क्त्रोद्घातेष्वारोपयन्ति, तद्गतनाशादि च तस्मिन्। पुरुषबुद्ध्यवस्थस्यैव चार्थस्य प्रत्ययमादधाति शब्दः। तेनैव तस्य संबन्धाद्' इति।

स च शब्दो वस्तुत एको ऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपो ऽनन्तपदरूपतामिवापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः।

---

( कुञ्चिकाटीका )

सायात्। *वक्त्रोद्घाताः*। वक्त्रव्यापाराः। *सच*। श्रोतृबुद्धिस्थश्च। ननु शब्दस्य नित्यत्वे सर्वदाऽर्थप्रत्ययापत्तिरत आह *तदनुरक्त इति*। वक्त्रोद्घातव्यञ्जित इत्यर्थः। *तत्रत्येति*। आभ्यन्तरशब्दगतेत्यर्थः। *तद्गतेति*। वक्त्रोद्घातगतेत्यर्थः। *तस्मिन्*। बुद्धिस्थे। *तेनैव*। बुद्धिस्थेनैव। *तस्य*। बुद्धिस्थस्य। *वर्णसंस्कारैरिति*।

( कलाटीका )

दिना। *तत्र*। श्रोतुर्हृदयाकाशे। वक्तृबुद्धिवत् श्रोतृबुद्धिरपि उभयरूपेत्याह *सर्वार्थेति*। *तद्बुद्धिम्*। श्रोतृबुद्धिम्। ननु तस्य नष्टत्वात्कथं तेन तद्व्यापनमत आह—*पुरुषेति*। वक्तृपुरुषेत्यर्थः। *वक्त्रोद्घाताः*। वर्णरूपा ध्वनयः। तस्य सर्वार्थप्रत्यायकत्वनिरासायाह—*स चेति*। शब्देत्यर्थः। *तदनुरक्तः*। वक्त्रोद्घातानुरक्तः। इतरेतराध्यासमाह—*तत्रत्येति*। शब्दनिष्ठेत्यर्थः। *तद्गतेति*। विनाशिवक्त्रोद्घातनिष्ठेत्यर्थः। आदिनोत्पत्त्यादि। पूर्वादिना वाक्यम्। *तस्मिन्*। शब्दे। एवं बौद्धस्य वाचकत्वमुक्त्वा वाच्यत्वमपि बौद्धस्यैवेत्याह—*पुरुषेति*। एवं स्फोटादि निरूप्याथ वाक्यस्फोटस्यैव मुख्यत्वं सिद्धान्ततया प्रागुक्तं प्रतिपादयितुमन्यसिद्धान्तं तावदाह—*स चेति*। स्फोटरूपमित्यर्थः। तदभिव्यञ्जनमेव तत्संकारः। वस्तुतो ऽतत्त्वादाह—*एवेति*। *सर्वार्थेति*। व्यधिकरणबहुव्रीहिः। नन्वेवमस्मदादीनामपि सर्वतः सर्वबोधापत्ति-

---

(१) 'वर्णेषु' इतिपा. कुं. टी. युतकखपु०।

सा शक्तिश्च योगिप्रत्यक्षगम्या नास्मज्ज्ञानगम्या । यत्रैव व्यवहारादिना तज्ज्ञानं तत्रैवास्माकं बोध इति मर्यादा । एवमेकैकवर्णोऽपि सहकारिवर्णान्तरसंबन्धाद् अनन्तपदरूप इति सा ऽपि तत्तच्छक्तिरिति गकारौकारविसर्जनीया गोर्वाचका इति लोकस्याविचारितरमणीये तत्समूहे वाचकत्वग्रहः । तादृशस्यैव शास्त्रेणान्वाख्यानं तद्दृष्ट्या बोध्यम् ।

तदुक्तं भाष्ये—'अथवा प्रतीतपदार्थको लोके ध्वनिः

---

( कुञ्जिकाटीका )

प्रतिबिम्बितं यत्तत्तत्पदं तद्रूप इत्यर्थः । *यत्रैव* । यस्मिन्पद एव ।

( कलाटीका )

रत आह—*सा शक्तिश्चेति* । एवं च यत्र शक्तिग्रहस्तत्रैव बोधोऽस्माकं तत्सत्त्वेऽपि नान्यत्रेति नातिप्रसङ्गस्तदाह—*यत्रैवेति* । आदिना कोशादि । *तज्ज्ञानम्* । शक्तिग्रहः । एवं सिद्धान्तान्तरमुक्त्वा प्रक्रियासिद्धान्तमाह—*एवमिति* । तद्वदयमप्यनन्तपदरूप इत्यर्थः । न तु वास्तवत्वेन साम्यमिति भावः । *सम्बन्धात्* । तमाश्रित्य सर्वपदभवनशक्तिमत्त्वादिति शेषः । *रूप इतीति* । तत्तामन्यत्र इवेत्यर्थः । *तच्छक्तिः* । सर्वपदार्थबोधनशक्तिकः । अयं भावः । गो-गण-गौर इत्यादिषु गोत्वाद्यभिधायिषु गकारो दृष्ट इति तत्तदभिधानशक्तिरेव शोचिरादिषु ईश्वराद्यर्थाभिधायिषु ओकारो दृष्ट इति तत्तदभिधानशक्तिः वर्णस्यानेन पदता चैवं पूर्वांगकार उत्तरेण औरिति वर्णद्वयेन गणेति पदाद्यावर्त्योत्तरश्च विसर्जनीयः पूर्वेण गकार औकाररूपवर्णद्वयेन घटो नौरित्यादिपदेभ्यो व्यावर्त्य विशेषे गौरित्यखण्डे पदे गोवाचके तादात्म्येनावस्थाप्यते इत्यादिप्रकरणे । एवं वर्णाविवेकतः संकेत्य ते यतः पदमेवार्थस्य वाचकमत्राविवेके च ध्वनिरूपानुरागो बीजम् । स्फोटान्तराद्यावर्त्तनीयवर्णाविकेनेव सङ्केतोपदेशः सङ्केतग्रहश्च भवतीति लोकभ्रमोपपत्तिरिति । *विसर्जनीयाः* । समुदिताः । तत्त्वतः प्रागुक्तयुक्त्याऽसत्त्वादाह—*अविचारीति* । अस्यावश्यकत्वमाह—*तादृशेति* । अन्यथा शास्त्रानर्थक्यमेवेति भावः ।

इदमपि भाष्यसंमतमित्याह—*तदुक्तमिति* । उक्तार्थलाभायाह

शब्दः' इति । लोके ऽर्थबोधकत्वेन गृहीतो ध्वनिर्वर्णात्मकः तत्समूहः शब्द इति तदर्थः । "अथ गौरित्यत्र कः शब्द" इति प्रश्ने इदमुत्तरम् ।

अखण्डो ऽपि स्फोटो गकाराद्यवस्थाभ्यो भिन्नोऽभिभिन्नश्च चरमावस्थया विसर्जनीयादिरूपया पदादिरूपेण व्यज्यत इति वर्णेषु तत्त्वव्यवहारोपपत्तिर्लोकस्येति बोध्यम् ।

एवं सर्वपदेषु पदान्तरसहकारेण नानावाक्यभवनशक्तित्वं तत्तद्वाक्यार्थभवनशक्तिमत्त्वं च ।

यद्यपि परस्य बुभुत्सितार्थप्रत्यायनाय शब्दप्रयोगः,

---

( कुञ्जिकाटीका )

*तज्ज्ञानम्*। तद्दशशक्तिज्ञानम् । *भिन्न इति* । अखण्डत्वात् । अभिन्नस्तु प्रतिबिम्बवशात् । *तत्त्वेति* । शब्दत्वेत्यर्थः ।

( कलाटीका )

*लोकेऽर्थबोधकत्वेनेति* । *तत्समूहः* । वर्णसमूहः । नन्वस्य भाष्ये प्रसिद्धमर्थान्तरमेव यथाश्रुतं कुतो नेति आह—*अथ गौरिति* । एवञ्चार्थान्तरं नैवं तात्पर्यविषयभूतं भगवत इति भावः । दृष्टान्तैकवाक्यतया वाचकत्वस्य तन्मात्रनिष्ठत्वादत्र तद्रूपत्वे ऽपि कथं तत्त्वमितिशङ्कानिरासायास्य भाष्यस्य तात्पर्यमाह—*अखण्डोपीति* । परिणामपरिणामिनोस्तादात्म्यादाह—*गकाराद्येति* । *चरमेति* । पदादेरित्यादिः । *तत्त्वेति* । शब्दत्वेत्यर्थः । अयं भावः। यथा बीजाङ्कुराद्यनेकावस्थावृक्षरूपो धर्मी शेषावस्थया पूर्णतयाऽभिव्यज्यतेऽप्राम्रवृक्षः स च बीजादिभ्यो भिन्नः, भेदाभेदयोरनुभवात्तथा गकारौकाराद्यनेकावस्था विसर्जनीयादिचरमावस्थया पूर्णतया अभिव्यज्यते।'इदं गौरितिपदम्' इत्यादिरूपेण । स च गकाराद्यवस्थाभ्यो भिन्नाभिन्नः प्रत्येकावस्थया भेदावगमात्समुदिताभिरभेदावगमाच्च । यथा च बीजादिषु वृक्षाभेदप्रतीतिः । एवं प्रत्येकवर्णेऽपि पदाभेद इति तदर्थमेव तत्प्रतिक्रिया सिद्धान्तमाह—*एवमिति* । वर्णवदित्यर्थः । अत्रावास्तवत्वकृतमपि साम्यम् । ननु इदमयुक्तं वृद्धव्यवहारेण वाक्यस्यैव वाक्यार्थे शक्तिग्रहणे तस्यैव बोधकत्वेन पदानामेवासत्त्वादित्याशयेनाह 'यद्यपीत्यादि भाष्ये' इत्यन्तेन । आदिना निवृत्तिग्रहणम् । उदा-

परस्य च प्रवृत्त्यादिविषय एव प्रायेण बुभुत्सितः स च वाक्यार्थ एवेति सर्वे शब्दाः तत्परा एव । यत्रापि केवलं 'वृक्ष' इति प्रयुज्यते तत्राप्याकाङ्क्षातात्पर्यादिवशाद् 'अस्ति, चलति, छिद्यते वा' इतिपदान्तरार्थानामध्याहारः । क्रियाविशेषतात्पर्यानवधारणेऽप्यस्तीत्यध्याहारः । बुद्धिसत्ताया बोधविषयबौद्धपदार्थेनाव्यभिचारात् । लोकेऽस्त्यर्थं विना शुद्धपदार्थानवगतेश्च । एवं क्रियापदादिमात्रप्रयोगे सर्वकारकाध्याहारः । 'चैत्रोऽग्निना तण्डुलान्पचति' इत्यादिप्रयोगस्तु कारकान्तर-

---

( कुञ्जिकाटीका )

*तत्परा एव* । वाक्यार्थपरा एव । *बुद्धिसत्ताया इति* । अयं भावः–अस्तीत्यनेन साध्यावस्था प्रतीयते, सिद्धेन च साधनेन साध्यता भवति, सिद्धे च साधने साध्यक्रिया भवति ।

तदुक्तं हरिणा—

प्राक् च सत्ताऽभिसम्बन्धान्मुख्या सत्ता कथं भवेत् ।
असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववद् ॥ इति ।

तस्माद् बुद्धिसत्तासमाविष्टस्यैव बाह्यसत्तोपचार इत्याशयेनैवोक्तं–

एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते । इति ।

*अस्त्यर्थं विनेति* । पदार्थमात्रे अस्त्यर्थस्यात्मधारणस्याव्यभि-

( कलाटीका )

सीनस्यापि तस्य सत्वादाह—*प्रायेणेति । तत्परा एव वाक्यार्थतात्पर्यका एव । व्यभिचारमुद्धरति—*तत्रापीति* । आदिना योग्यतार्थं एवाकाङ्क्षादिसत्त्वादाह—*पदान्तरार्थानामिति* । पदार्थज्ञानस्यैव शाब्दकारणस्य अनुपदमेव वक्ष्यमाणत्वान्न दोष इति भावः । ननु क्रियाविशेषे तात्पर्यादिसत्वे उक्तरीत्या निर्वाहेऽपि यत्र तदेव न तत्र व्यभिचार एव अत आह—*क्रियाविशेषे इति* । *बोधेति* । श्रोतुरित्यादिः । एवंकारकवत् । आदिना गुणपदादि । अग्रे आदिना द्रव्यादि ।

नन्वेवं सर्वोपादानं क्वाचित्कं व्यर्थमत आह *चैत्रोऽग्नीति* । तथाच सर्वत्र वाक्यस्यैव बोधकत्वेन किमर्थं व्याकरणेन पदानामन्वाख्यानम् । किञ्च पदवद्वाक्यमखण्डमेव न सन्त्येव पदानीति तदन्वा-

निवृत्त्यर्थः क्रियान्तरनिवृत्त्यर्थो नियमायेति स्पष्टमर्थव- त्सूत्रे भाष्ये, तथापि(१)अन्वाख्यानलाघवाय पदानि, तत्र प्रकृतिप्रत्ययभागाः,तत्तदर्थाश्च कल्प्यन्ते। तद्द्वारा पदार्थबोधनं वाक्यार्थबोधनं च शास्त्रफलम्। केवलरू- ढेषु तु वर्णसाजात्यादिनाऽवयवकल्पनम्। स्पष्टं चेदं निरुक्ते।

यत्र तु वाक्यस्यैव शास्त्रेण संस्कारः तत्र नैव प- दात्पदार्थबोधः। यथा 'षट्त्सन्त' इत्यादौ। अत एव "ड:सि" (अष्टा०सू०८।३।२९) इति सूत्रे भाष्ये 'धुडादयः पूर्वान्ता एव किं न क्रियन्ते' इत्याशङ्क्य पूर्वान्तत्व ष्टु- त्वापादनेन समाहितम्। अन्यथा तकारविशिष्टस्य स- त्पदाद्यर्थबोधकत्वाय परादित्वमेवावश्यकमिति तद्वि-

(कुञ्जिकाटीका)

चारात्। *तथापि*। सर्वत्र वाक्यार्थस्यैव विषयत्वेऽपि। *पदानी- ति*। कल्प्यन्त इत्यत्रान्वयः। *तद्द्वारा*। प्रकृत्याद्यर्थद्वारा। ननु रूढेष्ववयवार्थाभावात्कथमवयवकल्पनमत आह *वर्णसाजात्यादिने- ति*। तदीयवर्णानामनर्थकत्वेऽप्यर्थवत्सजातीयत्वमस्त्येव। *तत्र नैवेति*। तकारविशिष्टस्यैव'त्सन्त' इत्यस्य बोधकतया आवापोद्धापल- भ्याया अर्थसत्ताया अत्र पदे असम्भवादिति भावः। *ष्टुत्वापादने- नेति*। वाक्यार्थदोषाभावाद्रूपासिद्धिरेव दोष उक्त इत्यर्थः। *निर्द-

(कलाटीका)

ख्यानमसम्भवीति पूर्वपक्षतात्पर्यम्। *केषु*। वाक्येषु। तेषामानन्त्ये- नान्यथा तदसम्भवो गौरवं चेत्यत आह *अन्वाख्यानेति*। तत्र पदेषु कल्पितान्वयव्यतिरेकाभ्यामाह *तत्तदर्थाश्चेति*। नन्वेवं शास्त्राप्रामा- ण्यमत आह *द्वारेति*। यौगिकेष्वित्युक्तेः फलमाह *केवलेति*। आदिना पदसाजात्यम्। *स्पष्टञ्चेदमिति*। तत्राप्यनेकव्युत्पत्तिः प्रदर्शिता। तत्रापि विशेषमाह *यत्र त्विति*। इदं भाष्यसंमतमित्याह *अत एवेति*। तत्र तत्र तदभावादेवेत्यर्थः। *अन्यथा*। तथा तत्रा-

(१) 'तथापि यौगिकेषु अन्वाख्या' इति ख०पु० पाठः।

चारासङ्गतिः, निर्दलत्वात् । मम तु वाक्यार्थबोधे भेदाभावान्न दोषः। एतेन पदात्पदार्थज्ञानपूर्वक एव वाक्यार्थबोध इत्यपास्तम् ।

वस्तुतः सर्वं वाक्यमखण्डमेव । पदान्यसत्यान्येव । पदात्पदार्थबोध इत्यङ्गीकारे चैत्रादिपदानां सकलक्रियासाधारणे ऽर्थे गृहीतशक्तिकानां तत्तदर्थान्वित-

---

( कुञ्जिकाटीका )

लत्वादिति* । पूर्वान्तत्वे तकारान्तस्यैव बोधकत्वात्परादित्वे तकारादेर्बोधकत्वाद्विचारासङ्गतिरित्यर्थः । *वाक्यार्थेति* । पदानां त्वर्थ एव नास्तीति भावः । *न दोषः* । न भाष्यासङ्गतिः ।

*असत्यान्येवेति* । कथं तर्हि "जनपदतदवध्योश्च" इत्यत्र तच्छब्देनावयवार्थपरामर्श इति चेत् । सत्यम् । प्रतिभाविशेष एवात्र वाक्यार्थः । तच्छब्दश्चात्र सर्वनामसदृश एव, नतु सर्वनाम । *चैत्रादिपदानामिति* । क्रियासामान्यान्विते शक्ताच्चैत्रपदाद्विशेषबोधे लक्षणापत्तिरित्यर्थः । ननु विशेषोऽपि सामान्यान्तर्गतत्वाच्छक्य एवेत्यत

( कलाटीका )

पि तदङ्गीकारे । नैयायिकादिमतं खण्डयति । *एतेनेति* । उक्तभाष्यविरोधेनेत्यर्थः ।

तदेव मतमाह—*वस्तुत इत्याद्यलमित्यन्तेन* । *असत्यान्येव* । कल्पितान्येव । विपक्षे बाधकमाह—*पदादिति* । यत इत्यादिः । नित्यसाकाङ्क्षत्वाद्विशेषगमकाभावाच्चाह—*सकलेति* । *तत्तदिति* ।

विशेषबोधाय लक्षणापत्तौ शक्त्या बोधकत्वभङ्गः। 'सा-मान्यरूपेण विशेषबोधे ऽपि लक्षणा' इति स्पष्टं काव्य प्रकाशे।

किञ्च पदानां सत्यत्वे 'राजा, राजानं, राज्ञा, राज-नि' इत्यादौ राजरूपार्थप्रत्यायकस्यानियतत्वं न स्यात्। सत्यस्य नियतत्वात्। 'हे राजपुरुष' इत्यत्र राजेति क्रि-यापदार्थप्रतीत्यापत्तेश्च। अत एव भाष्ये 'न लक्षणेन प-

---

( कुञ्जिकाटीका )

आह *सामान्यरूपेणेति*। *पदानां सत्यत्वे इति*। पदानां सत्यत्वे 'राजानं, राज्ञा' इत्यादौ राजरूपार्थे एकरूपमेव पदं नियमतः स्यात्, सत्यस्य नियतत्वादित्यर्थः। *क्रियापदार्थेति। 'हे पुरुष भ्राजस्व' इ-

( कलाटीका )

वृद्ध्यादिक्रियारूपेत्यर्थः। तत्त्वादेव विशेषत्वमिति भावः। (१)ननु सामान्यरूपेण शक्त्यैवास्तु विशेषबोधोऽत आह—*सामान्येति*। शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमवत्समान-विशेष्यकत्वनियमस्याप्यङ्गीकारादिति भावः(१)। *स्पष्टमिति*। ननु केवलान्नैव तथा बोधः, वाक्यात्तु आकाङ्क्षाबलादिति नायं दोषः, अत आह—*किञ्चेति*। *सत्यत्वे*। आपेक्षिकेत्यादिः। *प्रत्या-यकस्य*। प्रकृतिभावस्य। दोषान्तरमाह—*हेराजेति*। भाष्यसंम-तिमाह—*अत एवेति*। दोषद्वयसत्त्वेनाखण्डवाक्यस्यैव सत्यत्वा-

---

(१) एतच्चिन्हयुक्तः पाठः ख० पु० नास्ति।

दकारा अनुवर्त्याः' इत्यादिना "आशितःकर्त्ता" (अष्टा०-सू० ६।१।२०७) इत्यादौ पदानामसत्यत्वं दर्शितम् । सत्यत्वे तु लक्षणेन तदननुवर्तनासङ्गतिः । "पदप्रकृतिः संहि-

---

( कुञ्जिकाटीका )

त्यर्थः स्यादिति भावः । *न लक्षणेन पदकारा इति* । 'ऊदनोर्देशे' इति दीर्घोच्चारणमवग्रहार्थम्' इति भाष्यं तु विरुध्यते । एकदेश्युक्तिरियं "अनूपो गोमान्" इत्यादौ ऋग्वेदिनामवग्रहादर्शनादित्यन्ये ।

*पदानामसत्यत्वमिति* । पदविभागस्यासत्यत्वादेव हि तदनुरोधो न भवति । किञ्च पदानां सत्यत्वे तेषां स्वतः सिद्धत्वात्पदानि कुर्वन्तीति पदकारा इति समाख्याऽपि विरुध्येत ।

ननु पदार्थानामभावे 'धवखदिरपलाशाः' इत्यत्र बहुवचनं कथमिति चेत् । 'गर्गाः' इत्यत्र यथैक एव गर्गशब्दो बहुषु वर्त्तते, तथा शब्दशक्तिमहिम्ना द्वन्द्वस्यापि बहुषु वृत्तेः । एवं 'ब्राह्मणा भोज्यन्ताम्' इत्यादौ पदार्थव्यतिरेकेण वाक्यार्थाभावे ऽपि यथा प्रत्येकं भुजिक्रिया समाप्यते एवं द्वन्द्वावयवेष्वपि प्रत्येकं तत्संभवः ।

( कलाटीका )

देवेत्यर्थः । "पदकारैर्नाम लक्षणमनुवर्त्यम्" इति-आदिना सङ्ग्रहः । नन्वेवं प्रातिशाख्यविरोधस्तेन बहुव्रीहिणा पदानां सत्यत्वप्रतिपाद-

ता" इत्यत्र तु षष्ठीसमासः।

तथा च तत्रैव कैयटः-'संहितैवापौरुषेयी पदानि तु पौरुषेयाणि' इति।

किञ्च तेषां सत्यत्वे अश्वकर्णादावश्वाद्यर्थप्रतीत्यापत्तिः। इदं रूढम्, इदं यौगिकम्, इदं योगरूढमित्याद्यपि शास्त्रकृत्कल्पनैव विशि-

---

( कुञ्जिकाटीका )

ननु पदानामसत्यत्वमयुक्तं "पदप्रकृतिः संहिता" इति निरुक्तविरोधात्। तथाहि-पदानि प्रकृतिर्यस्याः सा संहिता। पदान्येव हि संहन्यमानानि संहिता भवति इत्यत आह *षष्ठीसमास इति*। अयं भावः-पदानां या प्रकृतिः सा संहिता। संहितातो हि पदानि क्रियन्ते, तस्मात्संहितयैव मन्त्राणामध्ययनाद्विनियोगाच्च संहितैव प्रकृतिः। *संहितैवेति*। संहितयैव पाठस्यानादित्वात्पदविभागस्याधुनिकत्वमेवेत्यर्थः। *अश्वकर्णः*। ओषधिविशेषः। ननु पदानामसत्यत्वे यौगिकरूढादिविभागः कथमत आह *कल्पनैवेति*

( कलाटीका )

नाद्, अत आह-*पदेति*। अत्र सम्मतिमाह—*तथाचेति*। षष्ठीसमासे चेत्यर्थः। *तत्रैव*। "आशितः कर्ता" इत्यत्रैव भाष्ये। दोषान्तरमाह—*किञ्चेति*। नन्वेवं रूढत्वादिविभागोच्छेदापत्तिरत आह—*इदं रूढमिति*। आदिना 'इदं शक्तम्' 'इदं लाक्षणिकम्'

# हरिदास-संस्कृत-सीरिज़ ।

# काशीसंस्कृतसीरीज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं१) रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादि-समासिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकाण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्टोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च । ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम् । मधुसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम् । श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषा बिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः । भाषाटीकासहितः । ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः । (व्याकरणं ३)रु०४—०

२४ न्यायवार्त्तिकतात्पर्यटीका । श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः । (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः । (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । ( कर्मकाण्डवि० ३ ) रु० ०—५

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु०४- ८

२८ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं०श्रीकनकलाल ठक्कुरकृतार्ऽथप्रकाशिकाटीकया च समलङ्कृतम । (काव्य३) रु० ०-१२

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया-जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । ( काम०२ )यन्त्रस्थ

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः। म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः। (न्यायं ४) रु० ६—०
३१ परिभाषेन्दुशेखरः। म० म० श्रीनागेशभट्टरचितः। म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ५) यन्त्रस्थ
३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः। (मीमां० २) रु० १—०
३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम्। परमर्षिभारद्वाजाद्द्योतकरविरचितम्। महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम्। (न्यायं वि० ५) रु० ६—०
३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४) (वैदिकं ३) रु० ८—०
३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०
३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०
३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ६) रु० ६—०
३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ७) रु० १—६
३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ६) रु० २—०
४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्योतिषं २) रु० ०—६
४१ मेदिनीकोशः। मेदिनीकारविरचितः। (कोशं १) रु० १—८
४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम्। सपूर्णम्। (भाग१—२) (मीमांसा ३) रु० १०—०
४३ न्यायदर्शनम्। श्रीगोतममुनीप्रणीतम्। श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम्। श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०
४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं १) रु० १—८
४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं २) रु० १—८

४६ भास्वती। श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता। (ज्योतिष ३) रु० २—०

४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीविरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः । पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ८) रु० १—४

४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७) रु० १—४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०४) रु० ४—०

५० अधिकरणकौमुदी। श्रीदेवनाथठक्कुरकृता। (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण कृता भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम्। (काव्य ५) रु० १-४

५२ कारकबोधः। साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका। श्रीविश्वेश्वरपाण्डेय निर्मिता। (काव्य० ६) रु०१—०

५४ अलङ्कारमुक्तावली। श्रीविश्वेश्वर पाण्डेय निर्मिता। (काव्य०७)रु०-१२-०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः। नारायणभट्टीयव्याख्यासहितः। सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः। श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः। (छंद वि० १) १—८

५६ अलङ्कारशेखरः। केशवमिश्रकृतः। साहित्योपाध्याय श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। (अलं०वि०१)रु० १-४

५७ शक्तिवादः। श्रीगदाधरभट्टाचार्यप्रणीतः। टीकात्रयोपेतः। कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः। (न्या० वि० ७) रु० २-०

५८ प्रौढमनोरमा। म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्ययासमेता। म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता। श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता। श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटिप्पण्याऽलङ्कृता (अव्ययीभावान्तः प्रथमो भागः) (व्याकरण वि० ९) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम्। श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम्। (कर्म० वि० ५) रु० ४—०

६० नाट्यशास्त्रम्। भरतमुनिप्रणीतम् ( सम्पूर्णम ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम्। ( नाट्यशास्त्र वि० १ ) यन्त्रस्थं

६१ काव्यालङ्कारः। श्रीभामहाचार्येण विनिर्मितः। काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमहाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः। (अलङ्कार वि० २) रु० १-८

६२ ब्रह्मवादः। गोस्वामि श्रीहरिरायजी महाराज विरचितः। श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्ययाऽमलङ्कृतः। तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः। तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः। श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम्। श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपारोशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः। ( शुद्धाद्वैतसम्प्रदाय वि० १ ) रु० १—०

६३ प्रेमरसायनम्। श्रीविश्वनाथपण्डितरचितम् (का०वि० ८)रु० १—०

६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च। श्रीमथुरानाथतर्कवागीशकृतम्। न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च। ( न्या० वि० ८ ) रु० ०—१२

६५ सिद्धान्तबिन्दुः। श्रीमधुसूदनसरस्वती विरचितः। श्रीभगवान्शङ्कराचार्य विरचित दशश्लोकव्याख्यारूपः श्रीगौड ब्रह्मानन्दविरचित न्यायरत्नावली-नारायणतीर्थ विरचित लघुव्याख्या टिप्पणीसहितः। ( वेदान्त वि० ८ ) रु० ५—०

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः। प्रेतकर्मव्रहीभूतयतिकर्मनिरूपणात्मकः। महामहोपाध्याय पं० श्री नित्यानन्दपन्तपर्वतीय विरचितः। (कर्मकाण्ड वि० ६) रु० १—८

६७ सांख्यदर्शनम्। श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम्। (सांख्य वि० १) रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः। आचार्यश्रीहेमचन्द्रेण विरचितः। ( कोश वि० २ ) रु० २—०

* शिशुपालवधम्। श्रीमन्माघकविनिर्मितं श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया महोपाध्याय श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया समेतम्। ( सम्पूर्णम् ) ( यन्त्रस्थं )

---

जयकृष्णदास—हरिदासगुप्तः,
**चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,**
गोपालमन्दिर के उत्तर फाटक बनारस सिटी।